इति महा पूजा विधिः।

वास्तु संहितायाम्।

पूजनीयो महादेवो लिङ्गमूर्त्तिः सनातनः।
पद्ममष्टदलं हैमं नवरत्नैरलङ्कृतं॥
कर्णिकाकेसरोपेतमासनं परिकल्पयेत्।
राजतन्तदभावे तु रक्तसितमथापि वा॥
पद्मं तस्याप्यभावे तु केवलं भावनामयम्।
तत्पद्मकर्णिका मध्ये कृत्वा लिङ्गङ्गमीयसम्।
अथ वा स्फाटिकोपेतं पूजयेद्विस्तृतक्रमात्।
प्रतिष्ठाप्य विधानेन तल्लिङ्गं कृतशोधनम्॥
परिकल्प्यासनं मूर्त्तौ पञ्चवक्त्रप्रकारतः।
पञ्चगव्यादिभिः पुष्पैर्यथाविभवसंश्रितैः॥
स्नापयेत् कलशैः पूर्णैः सहस्राद्यैस्तु शम्भवे।
गन्धद्रव्यैः स कर्पूरैश्चन्दनाद्यैः स कुङ्कुमैः॥
सवेदिकं समालिप्य लिङ्गं भूषणभूषितम्।
बिल्वपत्रैश्च पद्मैश्च रक्तैः श्वेतैस्तथोत्पलैः॥
नीलोत्पलैस्तथान्यैश्च पुष्पैस्तैस्तैः सुगन्धिभिः।
पुष्पैः प्रशस्तैर्विचित्रैश्च पत्रैर्दूर्वाक्षतादिभिः॥
समभ्यर्च्य यथा लाभं महा पूजा विधानतः।
धूपं दीपं तथा दद्यान्नैवेद्यञ्च विशेषतः॥
निवेदयित्वा विभवं कल्याणञ्च समाचरेत्।
इष्टानि च विशिष्टानि न्यायेनोपार्जितानि च॥

सर्व्वद्रव्याणि देयानि व्रते तस्मिन् विशेषतः।
श्रीपर्णोत्पलादिफलन्तत्प्रमाणं बिल्वपत्रके॥
पुष्पान्तरेण नियमो यथालाभं निवेदयेत्।
अष्टाङ्गमर्घमुद्दिष्टं धूपदीपौ विशेषतः॥
कृष्णागुरुरघोराख्ये वक्रे सव्ये मनःशिला।
चन्दनं वामदेवाख्ये मुखे कृष्णागुरुं पुनः॥
पौरुषे गुग्गुलुं सव्ये सौम्ये सौगन्धिकं मुखे।
ईशानेऽपि त्विशानीं वा दद्याद्धूपं विशेषतः॥
अगुरुमिश्रं गुग्गुलुं प्रदद्यात् घृतसंयुतम्।
चन्दनागुरुकुष्ठाद्यं सामान्यन्तु प्रचक्षते॥
कर्पूरवर्त्तिना देयो दीपोघृतवर्त्तिस्ततः।
अर्घ-माचमनं देयं प्रतिवक्त्रमतःपरम्॥
प्रथमावरणे पूज्यौ क्रमाच्च हरषण्मुखौ।
ब्रह्माङ्गानि तिलांश्चैव प्रथमावरणेऽर्च्चिताः।
द्वितीयावरणे पूज्याः विघ्नेशाश्चक्रवर्त्तिनः॥
तृतीयावरणे पश्चादष्टमूर्त्तिर्महेश्वरः।
महादेयादयस्तत्र तथैकादशमूर्त्तयः॥
चतुर्थावरणे पूज्याः सर्व्वएव गणेश्वराः।
बहिरेव तु पद्मस्य पञ्चमावरणक्रमात्॥
दशदिक्पतयः पूज्याः शास्त्रास्त्रानुचरास्तथा।
ब्रह्मणो मानसाः पुत्राः सर्व्वेऽपि ज्योतिषाङ्गणाः॥
सर्व्वे देवाश्च देव्यश्च सर्व्वाः सर्व्वेऽपि खेचराः।
पातालवासिनश्चान्ये सर्व्वे मुनिगणा अपि॥

योगिनो मरुतः पञ्च पञ्चगोमातरस्तथा।
क्षेत्रपालाश्च सगणाः सर्व्वञ्चैव चराचरम्॥
अथावरणपूजान्ते संपूज्य परमेश्वरं।
साज्यं सव्यञ्जनं हृद्यं हरेर्भक्तं निवेदयेत्॥
मुखवासादिकं दत्त्वा ताम्बूलं सोपदंशकम्।
अलङ्कृत्य च भूयोऽपि नानापुष्पविभूषणैः॥
नीराजनान्तं विस्तार्य्य पूजाशेषं समापयेत्।
वराङ्गं सोपहारञ्च शयनञ्च समीरयेत्॥
यदन्नं पाचितं हृद्यं तत्सर्व्वमनुपूर्व्वशः।
कृत्वा च कारयित्वा च हुत्वाचैव प्रपूजनम्॥
स्तोत्रं व्यामोहनं जप्त्वा विद्यां पञ्चाक्षरीं जपेत्।
दत्त्वार्घमष्टौ पुष्पाणि देवमुद्रासलिङ्गतः॥

ताम्बूलमुखवासयोर्लक्षणं मुक्तं
रत्नकोषे।

महापिप्पलपर्णानि क्रमुकस्य फलानि च।
शुक्तिचारेण संयुक्तं ताम्बूलमिति संज्ञितं॥
श्वेतपत्रञ्च पूर्णञ्च क्रमुकस्य फलानि च।
नारिकेलफलोपेतं मातुलाङ्गसमायुतम्।
एलाकक्कोलकर्पूरैर्मुखवासं प्रचक्षते॥
एतेषामप्यलाभे तु तत्तद्द्रव्यं स्मरेद्बुधः।
तत्तद्द्रव्यन्तु सङ्कल्प्य पुष्पैर्व्वापि समर्पयेदिति॥

इति प्रकारान्तरेण महापूजाविधिः।
विष्णुधर्म्मोत्तरात्।

महावर्त्तिः सदा देया भूमिपाल महाफला ।
कृष्णपक्षे विशेषेण तत्रापि च विशेषतः ॥
अमावास्या च निर्द्दिष्टा द्वादशी च महाफला ।
आश्वयुज्यामतीतायां कृष्णपक्षस्य या भवेत् ॥
अमावास्या महापुण्या द्वादशी च विशेषतः ।
देवस्य दक्षिणे पार्श्वे देया तैलतुला नृप ॥
पलाष्टकयुतां राजन् वर्त्तिं तत्र प्रकल्पयेत् ।
महारजनरक्तेन समग्रेण तु वाससा ॥
वामपार्श्वे तु देवस्य देया घृततुला नृप ।
पलाष्टकयुतां पुण्यां शुक्लां वर्त्तिञ्च दापयेत् ॥
वाससा तु समग्रेण सोपवासो जितेन्द्रियः ।
एवं वर्त्तिद्वयमिदं सकृद्दत्त्वा महीपते ॥
स्वर्गलोकश्चिरं भुक्त्वा जायते भूतले यदा ।
तदा भवति लक्ष्मीवान् रूपसौभाग्यसंयुतः ॥
राष्ट्रे च जायते तस्मिन् देशे च नगरे तथा ।
कुले च राजशार्दूल तत्रस्थाद्दीपवत्प्रभा ॥
अत्युज्ज्वलश्च भवति युद्धेषु कलहेषु च ।
ख्यातिं याति सदा लोके सज्जनानाञ्च सद्गुणः ॥
एकामप्यथ वा दद्यादभीष्टामनयोर्द्वयोः ।
मानुष्ये सर्व्वमाप्नोति यदुक्तन्ते मयानघ ॥
सामान्यस्य तु दीपस्य राजन् दानं महाफलम् ।
किं पुनर्महतस्तस्य फलस्यान्तो न विद्यते ॥
दीपदानं महापुण्यमन्यदेवस्य च ध्रुवम् ।

किं पुनर्देवदेवस्य अनन्तस्य महात्मनः॥
गिरिशृङ्गेषु दातव्या नदीनां पुलिनेषु च।
चतुष्पथेषु रथ्यासु ब्राह्मणानाञ्च वेश्मसु॥
वृक्षमूलेषु गोष्ठेषु कान्तारगहनेषु च।
दीपदानं महामन्त्रं महत्फलमुपाश्नुते॥

इति महादीपविधिः।

अथ व्रतारम्भकालः।

तत्र सत्यव्रतः।

उदयस्था तिथिर्य्याहि न भवेद्दिनमध्यभाक्।
सा खण्डा न व्रतानां स्यादारम्भे च समापने इति॥

एतद्व्यतिरिक्तायामखण्डायां

प्रारम्भमाह वृद्धवशिष्ठः।

खखण्डव्यापिमार्त्तण्डा यद्यखण्डा भवेत्तिथिः।
व्रतप्रारम्भणन्तस्यामनष्टगुरुशुक्रयुगिति॥

तिथिर्यद्यनष्टगुरुशुक्रयुक् अनस्तमितगुरुशुक्रयुक्ता तस्यां व्रतमारम्भणीयमित्यर्थः, इदमुपलक्षणं। गुरुशुक्रयोर्बाल्ये वार्द्धक्येऽपि व्रतमारम्भणीयमित्यर्थः।

तथाच वृद्धमनुबृहस्पती।

अन्याधानं प्रतिष्ठाञ्च यज्ञदानव्रतानि च।
वेदव्रत-वृषोत्सर्ग-चूडाकरण-मेखला।
माङ्गल्यमभिषेकञ्च मलमासे विवर्जयेत्॥
बाल्ये वा यदि वा वृद्धे शुक्रे वास्तङ्गते गुरौ।

मलमासेष्वेतानि वर्जयेद्देवदर्शनमिति ॥

गार्ग्योऽपि ।

नामा-न्नप्राशन-च्चौड़ं विवाहं मौञ्जिबन्धनम् ।
निष्क्रमञ्जातकर्मापि काम्यं वृषविसर्जनम् ॥
अस्तगे च गुरौ शुक्रे वाले वृद्धे मलिम्लुचे ।
उद्यापनमुपारम्भं व्रतानां नैव कारयेदिति ॥

लल्लः ।

नीचस्थे वक्रसंस्थे प्यभिचरणगते बालवृद्धास्तगे वा
सन्यासो देवयात्रा व्रतचरणविधिः कर्णवेधस्तु दीक्षा ।
मौञ्जीबन्धोऽथ चूडा परिणयनविधिर्वास्तुदेवप्रतिष्ठा
वर्ज्याः सद्भिः प्रयत्नात् त्रिदशपतिगुरौ सिंहराशिस्थितेचेति ॥

नीचलक्षणन्तु ज्योतिःशास्त्रे ।

सूर्य्यादिषूच्चमजगोमकराः क्रमात् स्युः ।
स्त्री कर्कि-मीन-वणिजोस्तगमञ्च नीचमिति ॥

उच्चस्थानात्सप्तमं नीचमित्यर्थः ।

तथाच नीचस्थे गुरौ मकरगते इत्यर्थः ।

शौनकः ।

कीर्त्यागारविवाह याग गमनं* चौराद्यकर्णव्यधं
विद्या-देवविलोकनो-पनयनं दीक्षा-परीक्षा व्रतं ।
स्नानं तीर्थगमं रथं पुर महादान प्रतिष्ठापनं

---

* योगमसनमिति पुस्तकान्तरे पाठः ।

सिंहस्थे विबुधार्चिते न शुभदं कर्म्मस्तथा सूर्य्यगे॥

अस्तलक्षणन्तु ब्रह्मसिद्धान्ते।

रविणासन्निरन्येषां ग्रहाणामस्तउच्यते।
ततोर्व्वाक् वार्द्धकं विद्यादूर्द्धं बाल्यं प्रकीर्त्तितमिति॥
एतयोरवधिः ज्योतिःशास्त्रेऽनेकधादर्शितः।
बालः शुक्रो दिवसदशकं पञ्चकञ्चैव वृद्धः
पश्चादह्नस्त्रितयमुदितः पञ्चमौढ्यः क्रमेण।
जीवो वृद्धः शिशुरपि सदा पञ्चमन्यैः शिशू तौ
वृद्धौ प्रोक्तौ दिवसदशकञ्चापरैः सप्तरात्रमिति॥
एतेषां पक्षाणां व्यवस्था देशान्तरविषया आपद्विषया वा।

तथाच गार्ग्यः।

शुक्रो गुरुः प्राक्पराक्च बालो
विन्ध्ये दशावन्तिषु सप्तरात्रं।
वङ्गेषु हूणेषु च षट्च पञ्च
शेषेच देशे त्रिदिनं वदन्तीति॥

वराहमिहिरोऽपि।

बहवो दर्शिताः काला ये बाल्ये वार्द्धकेऽपि च।
ग्राह्यास्तत्राधिकाः शेषा देशभेदादुतापदीति॥

अथमुद्रालक्षणानि।

संमुखीकृत्य हस्तौ द्वौ किञ्चित्सङ्कुचिताङ्गुली।
मुकुली तु समाख्याता पङ्कजप्रसृतैव सा॥

मुकुलीपङ्कजमुद्रयोः ।

पूर्व्वा च मुकुलो या च प्रदेशे मिलताङ्गुलिः ।
व्याकोशमुद्रा मुकुला पद्ममुद्रां प्रदर्शयेत् ॥

पद्ममुद्रायाः ।

अङ्गुष्ठौ कुञ्चितौ द्वौ तु स्वकीयाङ्गुलिवेष्टितौ ।
उभौ चाभिमुखौ हस्तौ योजयित्वा तु निष्ठुरा ॥

निष्ठुरायाः ।

तर्जन्यौ कुञ्चितौ कृत्वा तथैव च कनीयसी ।
अधोमुखा दृष्टनखा स्थिता मध्ये करस्य तु ॥
चतस्रश्चोच्छ्रिताः पृष्ठे अङ्गुष्ठावेकतः कुरु ।
नालं व्यवस्थितौ द्वौ तु व्योममुद्रा प्रकीर्त्तिता ॥

व्योममुद्रायाः ।

अथ वैदिकमन्त्राणामृषि दैवत छन्दांसि ।

तत् प्रयोजनमाह याज्ञवल्क्यः ।

आर्षं छन्दो दैवतञ्च विनियोगस्तथैव च ।
वेदितव्यं प्रयत्नेन ब्राह्मणेन विशेषतः ॥
अविदित्वा तु यः कुर्य्याद्याजनाध्ययनं जपम् ।
होममन्तर्जले, दानं तस्य चाल्पफलं लभेत् ॥

तथा ।

यो विजानाति मन्त्राणामार्षं छन्दश्च दैवतम् ।
विनियोगं ब्राह्मणञ्च मन्त्रार्थं ज्ञानकर्म्म च ॥

एवैकस्य ऋषेः सोऽपि वक्ष्योऽप्यतिथिवद्भवेत्।
देवता याश्च सायुज्यं गच्छत्यत्र न संशयः॥
पूर्व्वोक्तेन प्रकारेण ऋष्यादीन् वेत्ति यो द्विजः।
अधिकारी भवेत्तस्य रहस्यादिषु कर्म्मसु॥
येन यदृषिणादृष्टं सिद्धिः प्राप्ता च येन वै।
मन्त्रेण यस्य यत्प्रोक्तमृषेर्भावस्तदार्षकम्॥
छन्दनात् छन्द उद्दिष्टं वाससा इवचाकृतिः।
आत्मा सञ्छादितो देवैर्मृत्योर्भीतैस्तु वै पुरा॥
आदित्यैर्वसुभीरुद्रैस्तेन छन्दांसि तानि वै।
यस्य यस्य तु मन्त्रस्य उद्दिष्टा देवता तु या।
तदाकारं भवेत्तस्य देवत्वं देवतोच्यते॥
पुरा देवैः समूत्पन्ना मन्त्राः कर्म्मार्थमेव च।
अनेन चेदं कर्त्तव्यं विनियोगः स उच्यते॥
नैरुक्त्यं यच्च मन्त्रस्य बिनियोगप्रयोजनं।
प्रतीष्ठानं स्तुतिश्चैव ब्राह्मणं तदिहोच्यते॥
एवं पञ्चविधं योगं जपकाले ह्यनुस्मरेत्।
होमे चान्तर्जले योगे स्वाध्याये याजने तथेति॥

तत्रादौ ऋग्वेदमन्त्राः।

अग्निमीलेति सूक्तस्य मधुच्छन्दो विश्वामित्रोऽग्निर्गायत्री।

वायवायाहीति सप्तानां मधुच्छन्दाः।

आद्यानातिसृणां वायुः अनन्तराणामिन्द्रवायू। सप्तमायामित्रावरुणौ। सप्तानां गायत्री।

सदसस्पतिमितिमन्त्रस्य काण्वोमेधातिथिः सदसस्पतिर्गायत्री।

अश्वयोयं त्वध्वमित्यस्य काण्वोमेधातिथिरापोगायत्री।

यश्चिद्धिसत्यसोमपा इति आजीगर्त्तः शुनःशेफः इन्द्रः।

आद्यानां सप्तानां पंक्तिर्नवानां गायत्री।

युवाना मेधातिथिः काण्व ऋभयो गायत्री।

स्योनापृथिवी मेधातिथिः काण्वः पृथ्वी गायत्री।

अतोदेवेतिद्वयोर्मेधातिथिर्देवोविष्णुर्गायत्री।

कस्यनूनमिति पञ्चदशर्चस्य आजीगर्त्तिर्वैश्वामित्रो।

वा शुनःशेफः ऋषिः प्रथमायाः कः प्रजापतिस्त्रिष्टुप्।

द्वितीयाया अग्निस्त्रिष्टुप्।

अभिलेति तिसृषु सविता।

भगस्येत्यस्यां भगोवा गायत्री।

नहितइत्याद्या दश वारुणस्त्रिष्टुभः।

त्वमग्नेप्रथमोङ्गिरा इत्यष्टादशर्चस्य।

आङ्गिरस हिरण्यस्तूपः अग्निर्जगती।

अष्टमीषोडश्यष्टादश्यस्त्रिष्टुभः।

एतेति पञ्चदशर्चस्य आङ्गिरस हिरण्यस्तूप इन्द्रस्त्रिष्टुप्।

कद्रुद्रायेति नव घोरःकाण्वो रुद्रः।

तृतीयायां रुद्रो मित्रावरुणौ सप्तम्यादित्रिषु सोमः गायत्री।

यास्तइत्यन्त्या अनुष्टुप्।

उदुत्यञ्जातवेदसमितित्रयोदश, अन्त्यास्त्रिष्टुप् प्रस्कन्वः।

सूर्य्यः आद्या, नव गायत्र्यः।

दशम्यादितिस्रोऽनुष्टुभः अन्त्यतृचो रोगघ्नः।

अन्त्योर्ध्वर्चः शत्रुघ्नः। पञ्चानं दशर्चस्य शाक्त्यः

पाराशरोऽग्निर्द्विपदा विराट्।

शौनकमतेपञ्च पङ्क्तिः विराट्।

रयिर्नचित्रेचाद्दशर्चं शाक्त्यः पाराशरोऽग्निर्द्विपदा विराट्। शौनकमते पञ्च पङ्क्तिः विराट्। वनेषुजायुर्दश शौनकमते पञ्च। श्रीणन्नुपदश शौनकमते पञ्च। वनेमपूर्व्वीरेकादशर्चं शौनकमते षट्। उपप्रजिन्वन् दशर्चस्य शाक्त्यः पाराशरोऽग्निस्त्रिष्टुप्।

निकाव्यावेधसः। दश शाक्त्यः। पराशरोऽग्निस्त्रिष्टुप्। रयिर्नयः पितृवित्तः दशर्चस्य।

पराशरोऽग्निस्त्रिष्टुप्।

उपप्रयन्तो नव राहुगणो गौतमोऽग्निर्गायत्री।

हिरण्यकेशो रजसो द्वादशर्चस्य गौतमोऽग्निः आद्यास्तिस्र त्रिष्टुभः।

तासु मध्यस्थागो वा शुचोवाऽग्निःचतुर्थ्याद्यास्तिस्र उष्णिहः।

ततः षट्गायत्र्यः।

त्वं सोम प्रचिकेतोमनीषेतित्रयोविंशत्यृचस्य।

गौतमः सोमः आद्यचतसृणां त्रिष्टुप्।

ततो द्वादशानां गायत्री।

सप्तम्युष्णिक्। ततःषण्णां त्रिष्टुप्।

प्रपन्दिने एकादशर्चस्य। आङ्गिरसः कुत्सः मरुत्वानिन्द्रः।
आद्याः सप्त जगत्यः आद्या गर्भस्राविणी उपनिषत्।
ततश्चतस्रस्त्रिष्टुभः।

इमा रुद्रायतवसे इत्येकादशर्चस्य।

कुत्सो रुद्रः नवानां जगती।

दशम्येकादश्यौ त्रिष्टुप्।

उभे पुनामीति सप्तर्चस्य। पारुच्छेप इन्द्रः आद्या त्रिष्टुप्।
द्वितीयाद्यास्तिस्रोऽनुष्टुभः पञ्चमी गायत्री षष्ठी धृतिः सप्त
म्युष्णिक्। येदेवासः पारुच्छेप विश्वेदेवास्त्रिष्टुप्।
पितुन्नुस्तोषं एकादशर्च अगस्त्योऽ* प्रथमा अनुष्टुप्।
गर्भोष्णिक्। द्वितीयचतुर्थ्यौ गायत्री तृतीया अनुष्टुप्।
पञ्चम्यादितिस्रोऽनुष्टुभः ततस्तिस्रो गायत्र्यः अन्त्या बृहत्यनुष्टुभः

अग्नेनयेत्यष्टर्चं। अगस्त्योऽग्निस्त्रिष्टुप्।

अनर्वाणं वृषभमित्यष्टर्चस्य। अगस्त्यो बृहस्पतिस्त्रिष्टुप्
उपेमसृक्षीति पञ्चदशर्चं। गृत्सद अपोनप्ता। त्रैष्टुभम्।
कविन्नदज्ञनुषमितिमृचस्य गृत्समदः शकुन्त इन्द्रस्त्रिष्टुप्।
इन्द्रापर्व्वता चतुर्विंशमृचं। आद्यायां इन्द्रपर्व्वतौ। तत-
श्चतुर्दशीपर्य्यन्तामामिन्द्रः।
ततो द्वयोः ससर्परीवाक्। सप्तदश्यादिचतसृषु रथाङ्गानि
इन्द्रश्च। अन्त्यानां चतसृणामिन्द्रः।

---

* अगस्त्योऽग्नमिति पुस्तकान्तरे पाठः।

आद्या नव त्रिष्टुभः दशमी जगती। एकादशी त्रिष्टुप्।

द्वादश्यनुष्टुप्। त्रयोदशी गायत्री। ततो द्वे त्रिष्टुभौ। षोडशी जगती। सप्तदशी त्रिष्टुप्। अष्टादशी बृहती। एकोनविंशी त्रिष्टुप्। विंशी द्वाविंशी चानुष्टुप्। एकविंशी त्रयोविंशी चतुर्विंशी च त्रिष्टुप्।

अग्निनेन्द्रे णेति चतुर्विंशदृचस्य सूक्तस्य

श्यावाश्व आत्रेयः अग्निनौ उपरिष्टाज्ज्योतिषं।

द्वाविंशी चतुर्विंश्यौ पंक्ती त्रयोविंशी महाबृहती।

अवितासीति सप्तर्चस्य श्यावाश्व इन्द्रः शक्वरी।

अन्त्या महापङ्क्तिः।

अग्निमस्तोषीति दशर्चस्य। नाभाकः। काण्वोऽग्निर्महा पङ्क्तिः।

इमेविप्रस्येति। त्रयस्त्रिंशदृचस्य सूक्तस्य आङ्गिरसो विरूपाग्निर्गायत्री।

समिधाग्निमिति त्रिंशदृचस्य विरूपाग्निर्गायत्री।

आयायेति। द्विचत्वारिंशदृचस्य सूक्तस्य।त्रिशोकः काण्व इन्द्रो गायत्री।

महिवः। अष्टादशर्चस्य। त्रितआप्त्यः आदित्यो देवता।

अन्त्याः पञ्च उपस्यः महापंक्तिः दुःस्वप्नघ्नम्।

प्रतिते। पञ्चर्चं। पृषध्र काण्वः ऐन्द्रं गायत्रं आग्नि सौरी-अन्त्या पंक्तिः।

प्रोषस्मै द्वादशः प्रगाथकाण्वः ऐन्द्रम् पांक्तम्।

* उपस्येति क्वचित् पाठः।

सप्तम्यष्टमीनवम्यौ बृहत्यः त्वानुचभियान्।

एक विंशत्यृचस्य। मत्स्यः साम्मदः अगस्त्यः।

बहवोजालबद्धा मत्स्याश्च ऋषयः आदित्यौ देवता दशम्ये-काादशौ द्वादशीष्वा दितिः। गायत्रीच्छन्दः।

यो राजा पञ्चदशर्चं। पुरुहन्मा आङ्गिरसः ऐन्द्रं बार्हतम्।

द्वितीया चतुर्थी षष्ठ्यः सतोबृहत्यः त्रयोदश्युष्णिक्।

चतुर्दश्यनुष्टुप्। पञ्चदशी पुरउष्णिक्।

त्वमो अग्ने महोभिरिति पञ्चदशर्चस्य सूक्तस्य।

सुदीति पुरमीडावन्यतरो वा।

अग्निः गायत्री दशम्याद्याः समा बृहत्यः एकादशाद्याः विषमाः सतो बृहत्यः। कन्याऽवाः सप्तर्चस्य आत्रेय इन्द्रोऽनुष्टुप् आद्ये द्वे पंक्ती। उद्वेदभि। चतुस्त्रिंशत्। सूक्तश्च इन्द्रो गायत्री ऐन्द्राभवी अन्त्या।

आपोहिष्ठेति नवर्चस्य। आम्बरीषः सिन्धुद्वीप आपो-गायत्री

पञ्चमी वर्धमाना सप्तमी प्रतिष्ठा अन्त्ये द्वे अनुष्टुभौ। परेयिवांसमिति षोडशर्चस्य।

यमो वैवस्वतो यमः षष्ठी लिङ्गोक्तदेवता। सप्तम्या-दितिस्रः पित्र्या वा याम्या वा।

दशम्यादितिसृषु श्वानौ त्रिष्टुपच्छन्दः त्रयोदशी चतुर्दशी च अनुष्टुप्। पञ्चदशी बृहती। परस्त्याविति चतुर्दशर्चस्य

सङ्कुसुकोयामः आद्यानां चतसृणां मृत्युः। पञ्चम्याधाता। षष्ठ्यां त्वष्टा। पराः पितृयज्ञदेवत्यः अन्त्या प्राजापत्या वा त्रिष्टुप्। एकादशी प्रस्तारपङ्क्तिः त्रयोदशी जगती। अन्त्याऽनुष्टुप्। भद्रमइति दशर्चस्य। ऐन्द्रोविमदः प्राजापत्योवा वसुक्रद्दा सुतः अग्निर्गायत्री। आद्यैकपदा याम्यर्था द्वितीयानुऽष्टुप् नवमी विराट्। अन्त्यास्त्रिष्टुभः। प्रदेवत्रेति पञ्चदशर्चस्य ऐलूषः कवषः आपोवा आपोनप्त्रीवा त्रिष्टुप्। प्रावेपामामिति चतुर्द्दशर्चं। मौजवानच्चः कवयोवा। आद्या सप्तमी नवमीषु ऋषिस्तुतिः द्वादश्यामचस्तुतिः शेषाष्वचनिंदा। त्रैष्टुभं अस्त्रुन्नमिति चतुर्द्दशर्चस्य धानाकोलूषो विश्वेदेवा जगती अन्त्ये द्वे त्रिष्टुभौ। नमोमित्रस्येति द्वादशर्चस्य। सौर्योभितयाः सूर्य्याजगती दशमी त्रिष्टुप्। दिवस्परिद्वादशर्चस्य। वत्सप्रिरग्नि स्त्रिष्टुप् अन्त्येऽध्यर्चलिङ्गोक्ता देवता। मापगामेति षड्चस्य। बन्धुसुबन्धुश्रुतबन्धुविप्रबन्धव इन्द्रोगायत्री। यत्तेयममिति द्वादशर्चस्य बन्ध्वादयश्चत्वार ऋषयो यमादयो मनआवर्त्तनमनुष्टुप्। इदमित्थां इति सप्तविंशत्यृचस्य। नामानेदिष्टोमानवो विश्वेदेवास्त्रिष्टुप् बृहस्पतेइत्येकादशर्चस्य बृहस्पतइत्याङ्गिरसः परमात्मा त्रिष्टुप् नवमी जगती यस्ते मन्यो इति सप्तर्चस्य। मनुस्तापसोमन्युस्त्रिष्टुप्। प्रथमा जगती। रक्षोहणमिति पञ्चविंशदृचस्य॥ वायुर्भरद्वाजोऽग्निस्त्रिष्टुप्।

अन्त्याश्चतस्रोऽनुष्टुभः। हविष्यान्तमित्येकोनविंशत्यृचस्य आङ्गिरसो वा वामदेव्यो वा मुर्धन्वान् सूर्य्यो वैश्वानरस्त्रिष्टुप्। सहस्रशीर्षेषोड़शर्चस्य नारायणः परमात्मा त्रिष्टुप्।

या ओषधीरिति त्रयोविंशत्यृचस्य। आथर्वणोभिषगोषधीरनुष्टुप्। बृहस्पतेप्रतिमइति द्वादशर्चस्य। देवापि राष्टिषेणो। वृष्टिकामो विश्वे देवास्त्रिष्टुप्।

कयानश्चित्रं द्वादशर्चस्य। वैखानसो चन्द्र इन्द्रस्त्रिष्टुप्।

आशुःशिशान इति त्रयोदशर्चस्य। ऐन्द्रोऽप्रतिरथ इन्द्रस्त्रिष्टुप्।

चतुर्थी बार्हस्पत्या उपान्त्या मारुती अन्त्या च मारुत्यनुष्टुप्।

वैश्वाऽग्निमिति सप्तर्चस्य। क्रमेण सप्तर्षी जूति र्वातजूतिर्विप्रजूतिर्वृषाणकः।

करिक्रतः ऐतशः ऋष्यश्रृङ्गः ऋषयः केशी देवता अनुष्टुप्।

उतदेवा इति सप्तर्चस्य। भरद्वाज-काश्यप-गोतमा-त्रि-विश्वामित्र-जमदग्नि-वशिष्ठाः क्रमेण ऋषयो विश्वे देवाऽनुष्टुप्।

अग्नेऽच्छषड्र्चस्य तापसोग्नि विश्वे देवाऽनुष्टुप्।

इमां खनामीति षडर्चस्य इन्द्राणी ऋषिका।

उपनिषद्दइविश्वादेवता सपत्नी बाधनमनुष्टुबन्त्या पंक्तिः। शासः पञ्चर्चस्य भरद्वाजः शास इन्द्रोऽनुष्टुप्। मुञ्चामि पञ्चर्चस्य यक्ष्मनाशनः प्रजापति इन्द्राग्नी इन्द्रोवा त्रिष्टुप्। अन्त्या बृहती वा ब्रह्मणाग्निसंविदानः षडृचस्य रक्षोहा ब्राह्मो। गर्भसभाधानोग्निरनुष्टुप्। अपेहिपञ्चर्चस्य आङ्गिरसः प्रचेतो विश्वेदेवाऽनुष्टुप् तृतीया त्रिष्टुप्। अन्त्यापंक्तिर्दुःखप्नघ्नं। देवाःकपोतः पञ्चर्चस्य नैर्ऋतः कपोतो

विश्वे देवास्त्रिष्टुप् कपोती पद्याते प्रायश्चित्तम्। मयोभूःचतुष्कस्य। काक्षीवतः शबरी गौस्त्रिष्टुप्। पतङ्गमिति तृचस्य। प्राजापत्यः पतङ्गोमायभेद् त्रिष्टुप्। अपश्यन्त्वेति तृचस्य। प्रजापत्यः प्रजावां त्रिष्टुप्। विष्णुर्योनिमिति तृचस्य गर्भकर्त्ता त्वष्टा प्राजापत्योविष्णुर्वा विश्वेदेवाऽनुष्टुप्।

कस्यचिन्मते विष्णुर्योनिमिति पञ्चर्चम्।

महित्रीणामिति तृचस्य वाचर्षिः सत्यधृति गायत्री।

आयङ्गौस्तृचस्य सार्पराज्ञी आत्मा सूर्योवा गायत्री।

संसमित् चतुरृचस्य सम्वनन आङ्गिरसः संज्ञानमनुष्टुप् तृतीयात्रिष्टुप्।

वास्तोष्पते तृचस्य मैत्रावरुणी वशिष्ठोवास्तोष्पति त्रिष्टुप्।

तत्सवितुर्नवर्चस्य श्यावाश्वः सविता गायत्री प्रथमाऽनुष्टुप्।

मातारुद्राणामिति मन्त्रस्य जमदग्निर्भार्गवो गावस्त्रिष्टुप्।

शन्नोदेवीसूक्तस्य वशिष्ठो विश्वेदेवास्त्रिष्टुप्।

युवंवस्त्राणि सप्तर्चस्य दीर्घतमा मित्रावरुणौ त्रिष्टुप्।

समुद्रादूर्मिरित्येकादशर्चस्य वामदेवऋषिः अग्निः।

सूर्यः गावो घृतं वा देवताः अन्त्यास्त्रिष्टुप्।

उपान्त्या जगती।

स्वस्तिदाविशस्पतिः शासो भरद्वाज इन्द्रोऽनुष्टुप्।

सुदेवइत्यस्य प्रियमेध इन्द्रोऽनुष्टुप्।

वायोएते एकविंशत्यृचस्य गृत्समदः आद्ययोर्वायुः तृतीयाया इन्द्रावायू।

ततस्तिसृणां मित्रावरुणौ ततस्तिसृणां मित्रावरुणौ।

दशम्ये-कादशी-द्वादशीनामिन्द्रः ।

ततस्तृचस्य विश्वेदेवास्ततस्तिसृणां सरस्वती ।

एकोनविंशत्याः द्यावापृथिव्यौ हविर्धानौ वा ।

तृतीयपादेऽग्निर्वा । अन्त्ययोर्द्वयोर्द्यावापृथिव्यौ हविर्धानौ वा । गायत्रीछन्दः सर्व्वासां । आदित्यानामितितृचस्य वशिष्ठ आदित्यस्त्रिष्टुप् ।

आदित्यास इत्यृचस्य तद्वत् । यो यजाति मनुः आशिष अन्त्याद्युतिद्वारा यजमानः प्रशंस्यः । पञ्चम्यां दम्पती । शिष्टाद्यन्त्याशिषः गायत्री ।

चतुर्दश्यनुष्टुप् । पञ्चदश्याद्याः पंक्तयः ।

प्रवोदेवा सप्तर्चस्य वैश्वामित्रो ऋषभोऽग्निरनुष्टुप् ।

आयाग्निरित्यृचस्य । चितः सोमोऽनुष्णिक् ।

पिवासोममिति पञ्चदशर्चस्य भरद्वाज इन्द्रस्त्रिष्टुप् ।

अन्त्या द्विपदा । एषोउषाः पञ्चदशर्चस्य प्रस्कण्वाश्विनौ गायत्री ।

अग्निर्हुतमिति द्वादशर्चस्य काण्वो मेधातिथिरग्निर्गायत्री ।

अग्निनेति पादे निर्मन्थ्याहवनीयावग्नी ।

विष्णोर्नुकमिति षडर्चस्य दीर्घतमा विष्णुस्त्रिष्टुप् ।

तवश्रियेति मन्त्रस्य वसुश्रुतो विश्वे देवा स्त्रिष्टुप् ।

द्यौर्वः पितेत्यस्य अगस्त्यो विश्वे देवाः अनुष्टुप् ।

आवोराजानमिति षोडशर्चस्य वामदेव—

आद्या रौद्री द्वितीयादिषग्निस्त्रिष्टुप् ।

उत्तानपर्णेसुभग इत्यस्येन्द्राण्युपनिषद्दिव्यानुष्टुप् ।

मित्रोजनानिति नवर्चस्य विश्वामित्रो मित्रः ।

आद्याः पञ्च त्रिष्टुभः सप्तचतस्रो गायत्र्यः।

अमन्दांस्तोमानिति सप्तर्चस्य कक्षीवान् स्वनयनस्तुतिस्त्रि-
ष्टुप्।

अग्ने देऽनुष्टुभो। आद्यावांरथी यश्विनावृत्येकादशर्चस्य कक्षी-
वानश्विनौ त्रिष्टुप्। स्वादिष्ठयेति दशर्चस्य।

मधुच्छन्दा विश्वामित्रः सोमो गायत्री। पवस्वदेववीतिं।

दशर्चस्य मेधातिथिः काण्वः सोमो गायत्री।

एषदेवः दशर्चस्य शुनःशेफः सोमो गायत्री।

समाचेति दशर्चस्य हिरण्यस्तूपः सोमो गायत्री।

समिद्धः एकादशर्चस्य। काश्यपः असितः देवलोवा
ऋषिः।

ऋक्क्रमेण समिद्धोग्नि-तनूनपात् ईलः बर्हिः देव्योद्वारः
उषासानक्ताई देव्यो होतारौ तिस्रोदेवीः त्वष्टा वनस्पतिः
स्वाहाकृतयः गायत्रीच्छन्दः अन्त्याचतस्रोऽनुष्टुभः।

मन्द्रयेति नवर्चस्य असितो वा देवलो वा सोमो गायत्री।
अस्यग्रमिति नवर्चस्य देवलः काश्यपो वा सोमो गायत्री।
एते सोमा इति नवर्चस्य असितो वा देवलो वा सोमो
गायत्री। परिप्रियादिवः नवर्चस्य प्रस्ताग्रासः इति नवर्चं।
उपास्मैनवर्चं। सोमा असृग्रं नवर्चं। सोमः पुनानो अर्षति
नवर्चम्।

परिप्रासिष्यदशर्चं। एषधिया अष्टर्चं। एते सेतारः
अष्टर्चं। प्रनिम्नेनेवाष्टर्चा पेरिसुवानः सप्तर्चं।

यस्सोमसप्तर्चं। प्रकविः सप्तर्चं। एते धावन्ति सप्तर्चं।

एते सोमासः समर्चं। सोमा असृग्रं समर्चं। प्रसोमासः समर्चं

एतेसोमा इति वक्ष्यमाणीमानि। एवं मदृचस्य।

हठचुत आगस्त्यः सोमोगायत्री। तमस्यन्त।

मदृचस्य दार्ढाच्युतेध्माह: सोमोगायत्री। एष कविः स्वर्णा।

नृमेध आङ्गिरसः सोमोगायत्री। एषवाजीनां।

प्रियमेध आङ्गिरसः सोमोगायत्री।

प्रास्यधावा: स्वर्णा मामधमाङ्गिर: सोमोगायत्री। प्रास्य-धारा: ॥

स्वर्णा नृमेध आङ्गिरस: सोमो गायत्री।

प्रधारा॥ अस्य स्वर्णा विन्दुराङ्गिस: सोमो गायत्री।

प्रसोमास: ॥ स्वर्णा गौतमोराहुगण: सोमो गायत्री।

प्रसोमास: ॥ स्वर्णा श्यावाश्व आत्रेय: सोमो गायत्री।

प्रसोमास: ॥ स्वर्णाश्चितमास्य: सोमो गायत्री।

प्रसुवान: ॥ स्वर्णाङ्गोतमोराहुगण: सोमोगायत्री।

चित आन:पवस्व ॥ स्वर्णा प्रभवसु:। असर्जिरथ्य: ॥ २७ ॥ स्वर्णा प्रभूवसु:। ससमुत: ॥ स्वर्णा राहुगण:। एष उत्यः ॥ स्वर्णा राहुगण:। आसुरर्षं: ॥ स्वर्णा आङ्गिरसो बृहस्पति: पुनान: ॥ स्वर्णा बृहस्पति:। प्रयेगाव: ॥

स्वर्णा। जनयन् ॥ स्वर्णा। यो अत्य इव ॥

स्वर्णाश्च। मेधातिथि: सोमोदेवता। गायत्रीछन्द: सर्वांश ॥

अया इन्द्रो इति षखामपास्यः। सयवस्वः षर्णा मयास्य आङ्गिरसः। असृग्र मितिषखामयास्यः। अयासोमः पखानां भार्गवः कविः।

तस्मान्नृम्योषि पखानां। पवस्व स्वहष्टिमिति पखानाञ्च कविः।

उत्तेशुष्मासःपखानां। उतथ्य आङ्गिरसः अध्वर्योपखानां।

परिद्युक्षः पखानाञ्च उतथ्यः। उत्ते इतिचतुर्णां॥

अस्यप्रत्नामिति चतुर्णां।

वयं वयं चतुर्णाञ्च अवत्सारः परिसोमः।

चतुर्णामवत्सारः काश्यपः।

प्रतेधराः चतुर्णां। तरत्समन्दीचतुर्णां। पवस्वः॥ ६०॥

चतुर्णाञ्च अवत्सारः। सोमो देवता गायत्रीच्छन्दः सर्व्वत्र।

प्रगायत्रेण चतुर्णामवत्सारः सोमो गायत्री तृतीयापुर उष्णिक्॥

अयावीती॥ त्रिंशदृचस्य अमहीयुः सोमोगायत्री।

एते असृग्रन्त्रिंशदृचस्य॥ भार्गवोजमदग्निः सोमो गायत्री।

आपवस्व त्रिंशदृचस्व निध्रुविः काश्यपः सोमोगायत्री।

पवस्व विश्वचर्षणे त्रिंशदृचस्य।

शत। वैखानसाः सोमः एकोनविंशाद्यास्तिस्र आग्नेय्यः गायत्री अष्टादश्यनुष्टुप्।

असत्वादिष्टयेति सूक्तमारभ्य हिन्वन्तीति सूक्तपर्यन्तपवमानगुणविशिष्टएव सोमो देवता। त्वं सोमासीति द्वात्रिंशदृचस्य

आद्यचस्ये भरद्वाजः चतुर्थ्यादितिसृणां कश्यपः सप्तम्यादितिसृणां गोतमः।

दशम्यादिभितिसृणामत्रिः। त्रयोदश्यादितिसृणां विश्वामित्रः।

षोडश्यादितिसृणां जमदग्निः। एकोनविंश्यादितिसृणां वशिष्ठः।

पञ्चविंश्यादितिसृणां सप्तविंश्यादिति पञ्चानां सप्तर्षयः।

सोमोदेवता। दशम्यादितिसृणां पूषा वा सोमो वा अनुभोवा। त्रयोविंशोचतुर्विंश्योरग्निः पञ्चविंशी साविची।

षड्विंश्यग्निसाविची सप्तविंशी वैश्वदेवी। शेषेषु

सुसोमः। गायचीच्छन्दः। सप्तविंश्यनुष्टुप्। द्वादश्यादितिस्रो द्विपदा गायचयः चिंशीपुरउष्णिक्।

अन्त्योऽनुष्टुभौ। चिरस्मे सप्तर्षेगवः दशस्यार्चरेषुर्वैश्वामित्रः।

सोमो जगती अन्त्या चिष्टुप्।

आदधिषा नवर्चस्य ऋषभो वैश्वामित्रः सोमो जगती अन्त्या त्रिष्टुप्।

हरिमृजन्ति नवर्चस्य हरिमन्त आङ्गिरसः। सोमो जगती।

स्वकेनवर्चस्य यविच आङ्गिरसः सोमो जगती।

श्रियुनवर्चस्य वत्सोवानो शिजः सोमो जगती अष्टमी त्रिष्टुप्।

अभिप्रियाणि पञ्चर्चस्य भार्गवः कविः सोमो जगती। धर्त्तादिवः पञ्चर्चस्य।

एष प्रपञ्चर्चस्य। प्रराजापञ्चर्चस्य। अपोदसोमः पञ्चर्चस्य च कविः सोमो जगती।

सोमस्यधारा पञ्चर्चस्य भारद्वाजो वसुः सोमो जगती।

प्रसोमस्य पञ्चर्चस्य वसुः सोमो जगती अन्त्या त्रिष्टुप्।

असो विसोमः पञ्चर्चस्य वसुः सोमो जगती अन्त्या त्रिष्टुप्।

पवित्रन्ते पञ्चर्चस्य आङ्गिरसः पवित्रः सोमो जगती।

पवस्वदेवमादनः पञ्चर्चस्य। वाच्यः प्रजापतिः सोमो जगती।

इन्द्राय सोम द्वादशर्चस्य भार्गवोवेनः सोमो जगती।

अन्त्ये द्वे त्रिष्टुभौ।

प्रतआशवः अष्टाचत्वारिंशदृचस्य सूक्तस्य। आद्यासु दशसु अकृष्टाभाषाः एकादशादिदशसु सिकता निवावर्यः। एकविंशादिदशसु पृश्नियोजाः। एकत्रिंशादिदशसु आत्रेयः एकचत्वारिंशादिपञ्चसु अत्रिः।

अन्त्यासु तिसृषु गृत्समदः सोमो जगती सर्व्वासां।

प्रतुद्रवर्चस्य उशना सोम त्रिष्टुप्।

अयं सोम इन्द्रा अष्टर्चस्य उशना सोम त्रिष्टुप्।

प्रीस्यवह्निः सप्तर्चस्य उशना सोमत्रिष्टुप्।

प्रहिन्वानः षडर्चस्य वशिष्ठः सोमत्रिष्टुप्।

असर्जिवक्ता षडर्चस्य काश्यपः सोम त्रिष्टुप्।

परिसुवानः षडर्चस्य काश्यपः सोमत्रिष्टुप्।

साकमुक्षः पञ्चर्चस्य नोधा गौतमः सोम त्रिष्टुप्।

अधियत् पञ्चर्चस्य कण्व आङ्गिरसो घौरः सोम त्रिष्टुप्।

कनिक्रन्ति पञ्चर्चस्य च स्कन्नः सोमत्रिष्टुप्।

प्रवेनाथोश्चतुर्विंशद्वृचस्य दैवोदासिः प्रतर्दनः सोमः त्रिष्टुप्।
इति सूक्तानि।

अथ मन्त्राः। वायवायाः॥ १॥ २॥ १॥

मेधा तिथिः गायत्री। सदसस्पति॥ १॥ ३५॥ १॥

मेधा तिथिकाण्वः सदसस्पतिर्गायत्री। युवाना।२४१।

मेधातिथिः काण्व ऋभवो गायत्री स्योना पृथिवी॥ २॥
६॥ ५॥

मेधा तिथिः काण्वः पृथिवी गायत्री।

अतोदेवा॥ २॥ ७॥ १॥

मेधातिथिः काण्वो विष्णुर्गायत्री।

इदं विष्णुः॥ २॥ ७॥ २॥

मेधातिथिः काण्वो विष्णुर्गायत्री।

तद्विष्णोः॥ २॥ ७॥ ५॥

तद्दत्। वरुणः॥ २॥ १५॥ ९॥

मेधातिथिः कण्वो मित्रावरुणौ गायत्री।

तत्त्वायामिन्द्र॥ २॥ १५॥ १॥

शुनःशेफो अजीगर्तिर्वरुण त्रिष्टुप्।

उदुत्तम॥ २॥ १५॥ ५॥

शुनः शेफोजीगर्त्तिर्वरुण त्रिष्टुप्।

इमंमेवरुण॥ २॥ १९॥ ४॥ शुनः शेफोऽजीगर्त्तिर्वरुणो
गायत्री।

कद्रुद्राय॥ ३॥ २६॥ १॥ कण्वो घोरो रुद्रो गायत्री।

आकृष्णेन॥ ३॥ ३॥ २॥ हिरण्यस्तूपः सविता त्रिष्टुप्।

उदुत्यम् ॥ ४ ॥ ७ ॥ १ ॥ प्रस्कण्वः सूर्यो गायत्री।

एषोउषा ॥ ३ ॥ ३३ ॥ १ ॥ प्रस्कण्वोश्विनौ गायत्री।

शुक्रःशु ॥ ५ ॥ १२ ॥ १ ॥ पराशरः शुक्रो द्वैपदं वैराजम्। इम-मिन्द्रा ॥ ६ ॥ ५ ॥ ४ ॥ राहुगणो गौतम इन्द्र अनुष्टुप्। कोद्य युङ्क्ते ॥ ६ ॥ ८ ॥ १ ॥ गौतमोराहुगण इन्द्रस्त्रिष्टुप्।

आनोभद्रा ॥ ६ ॥ १५ ॥ १ ॥ गौतमो राहुगणो विश्वेदेवा स्त्रिष्टुप्।

अदितिर्द्यौः ॥ ६ ॥ १६ ॥ ५ ॥ तद्वत्।

ऋजुनीति ॥ ६ ॥ १७ ॥ १ ॥ गौतमोराहुगणो विश्वेदेवा गायत्री।

मधुवाता ॥ ६ ॥ १८ ॥ १ ॥ गौतमोराहुगणो विश्वेदेवा गायत्री।

आप्यायस्व ॥ ६ ॥ २२ ॥ ३ ॥ गौतमः सोमोगायत्री सन्तेप-यांसि गौतमो राहुगणः सोमस्त्रिष्टुप्।

सोमोधेनुम् ॥ ६ ॥ २२ ॥ ५ ॥ तद्वत्। तच्छंयोः ॥ ० ॥

शंयुर्विश्वे देवाः शक्करीरीम। जातवेदसे ॥ ७ ॥ ७ ॥ १ ॥

कश्यपोजातवेदाग्निस्त्रिष्टुप्।

इमारुद्राय ॥ ८ ॥ ५ ॥ ११ ॥ कुत्सोरुद्रोजगत्यते त्रिष्टुभौ।

मानस्तोके ॥ ८ ॥ ६ ॥ ३ ॥ तद्वत्।

चित्रंदेवानां ॥ ८ ॥ ७ ॥ १ ॥ कुत्सःसूर्यस्त्रिष्टुप्।

रथं रथं ॥ ९ ॥ ३ ॥ ४ ॥ कक्षीवान्नुपस्त्रिष्टुप्।

ये देवासो ॥ १० ॥ ४ ॥ ६ ॥ पारुच्छेपो विश्वे देवास्त्रिष्टुप्।

युवं वस्त्राणि ॥१०॥२२॥१॥ दीर्घतमोमित्रावरुणौ त्रिष्टुप्।

विष्णोर्नुकम्॥ १०॥ २४॥ १॥ दीर्घतमाविष्णुः त्रिष्टुप्।
तद्विष्णोः॥ १०॥ २४॥ २॥ तद्वत्। प्रविष्णवे॥३४॥१०॥
२४॥ ३॥ तद्वत्।

यदक्रन्द॥॥ ११॥ ११॥ १॥ दीर्घतमाअश्वस्त्रिष्टुप्।
समपुष्पन्ति॥ ११॥ १४॥ २॥ दीर्घतमाअश्वरं त्रिष्टुप्।
हिंकृण्वती॥११॥१८॥ २॥ दीर्घतमाविश्वे देवास्त्रिष्टुप्।
सूयवसा॥ ११॥ २१॥ ३॥ तद्वत्।

गौरीमिमाय॥ ११॥ २२॥ १ दीर्घतमाविश्वे देवाजग-
ती॥ १०॥

पितुंनुस्तोषं॥ १३॥ ६॥ १॥ अगस्त्योऽपितरस्त्रिष्टुप्।
अग्नेनय॥ १३॥ १०॥ १॥ अगस्तिरग्निस्त्रिष्टुप्।
त्वमग्ने रुद्र॥ १३॥ १८॥ १॥ गृत्समदोऽग्निर्जगती।
घृतं मिमिक्षे॥ १३॥ २६॥ ६॥ गृत्समदोऽग्निः स्वाहान्त
स्त्रिष्टुप्॥ १३॥

गणानां त्वा॥ १४॥ २९॥ १॥ गृत्समदो गणाधिपति-
र्जगती।

त्वंनोगोपा॥ १४॥ ३०॥ १॥ गृत्समदोबृहस्पतिर्जगती।
बृहस्पते॥ १४॥ ३१॥ ५॥ गृत्समदोबृहस्पतिस्त्रिष्टुप्।
ब्रह्मणस्पते॥ १४॥ ३२॥ ४॥ गृत्समदोब्रह्मणस्पति स्त्रि-
ष्टुप्॥ १४॥

स्तुतिस्तुतम्*॥ ५॥ १८॥ १॥ गृत्समदोवह्नी-
र्जगती॥ १५॥

---

* स्तुतिम्नुतमिति पुस्तकान्तरे पाठः।

कनिक्रदत्॥ १६॥ ११॥ १॥ गृत्समदः मरुत्स्त्रिष्टुप्।

युवासुवासाः॥ १७॥ ३॥ ५॥ विश्वामित्रोयूपस्त्रिष्टुप्।

वनस्पते॥ १७॥ ४॥ ६॥ विश्वामित्रोवनस्पतिस्त्रिष्टुप्।

इन्द्राग्नी॥ १७॥ १७॥ १२॥ विश्वामित्र इन्द्राग्नी गायत्री।

अभितष्टे॥ १८॥ २४॥ त्रिष्टुप्। विश्वामित्र इन्द्रस्त्रिष्टुप्।

सद्योहजाइन्द्रः॥ १९॥ ११॥ २॥ विश्वामित्र इन्द्रस्त्रिष्टुप्।

त्वंनो अग्ने॥ २०॥ १२॥ ५॥ विश्वामित्रोऽग्निस्त्रिष्टुप्।

तेमन्वत॥ २०॥ १५॥ १ वामदेवोऽग्निस्त्रिष्टुप्।

आवोराजा॥ २०॥ २०॥ १॥ तद्वत्।

कयानः॥ २२॥ २४॥ १। वामदेवइन्द्रोगायत्री।

दधिक्राव्णो॥ १३॥ १३॥ ५॥ वामदेवोदधिक्राव्णा-अनुष्टुप्। हंसःशुचिषत्॥ २३॥ १४॥ ५ वामदेवः सूर्यो जगती॥

वायोः शतं॥ २३। ५। ३। सदस्युर्वायुरनुष्टुप्। क्षेत्रस्य पतिना॥ २४। ९। १। पुत्रमिन्द्राक्षेत्राधिपतिरनुष्टुप्।

यस्त्वाहृदा। २४। १९। ५। वसुश्रुतोऽग्निस्त्रिष्टुप्॥

अग्निस्तुविश्र॥ २५। १०। ४। वसूयवोग्निरनुष्टुप्।

वीति होत्र। २५। १९। ३। वसूयवोऽग्निर्गायत्री॥

छ॥ वरुणं वो॥ २८। २। १। अघ नामा मित्रावरुणा-वनुष्टुप्॥

हिरण्यवर्णां। २८। ३। ८। १। आनन्दकर्दमचिक्लीतन्दिरालक्ष्मीरनुष्टुप्।

मूर्धानम् ॥ २८ ॥ ८ ॥ १ ॥ भरद्वाजोवैश्वानरस्त्रिष्टुप् । युगेयुगे ॥ २८ ॥ १० ॥ ५ ॥ भरद्वाजोविश्वे देवा जगती । अग्नआयाहि ॥ २८ ॥ २२ ॥ भरद्वाजोग्निर्गायत्री । पिबासोम । ३० ॥ १ ॥ १ ॥ भरद्वाज इन्द्र स्त्रिष्टुप् । आत्वावहन्तु ॥ ३० ॥ १ ॥ ८ ॥ मेधा तिथिरिन्द्रो गायत्री । महां इन्द्रो ॥ ३० ॥ ७ ॥ १ ॥ भरद्वाज इन्द्र स्त्रिष्टुप् । आगावः ॥ ३० ॥ २५ ॥ १ ॥ वीतहव्योगौस्त्रिष्टुप् । त्वां हवेषु ॥ ३१ ॥ १७ ॥ १ ॥ शंयुरिन्द्रो बृहती । त्वामिद्धि ॥ ३१ ॥ २७ ॥ १ ॥ शंयुर्बार्हस्पत्य इन्द्रो बृहती । त्रातारमिन्द्रा ॥ ३१ ॥ ३३ ॥ १ ॥ गर्गइन्द्रस्त्रिष्टुप् । इन्द्रः सुत्रा ॥ ३१ ॥ ३३ ॥ २ ॥ तद्वत् । विश्वे देवाः ॥ ३२ ॥ १६ ॥ ६ ॥ सुहोत्रादयो विश्वे देवा भरद्वाजो विश्वे देवा स्त्रिष्टुप् । सरस्वती ॥ ३२ ॥ ३२ ॥ ४ ॥ कुर्मोगार्त्समदः सरस्वती त्रिष्टुप् । धन्वनागा ॥ ३३ ॥ १८ ॥ २ ॥ पायुर्धनुस्त्रिष्टुप् । इन्द्रोनरो ॥ ३५ ॥ ११ ॥ १ ॥ वसिष्ठोग्नि स्त्रिष्टुप् । अभित्वाशूर ॥ ३५ ॥ २१ ॥ २ ॥ वसिष्ठ इन्द्रोबृहती ।

यज्ञ इन्द्राग्नी ॥ ३५ ॥ २८ ॥ १ ॥ वसिष्ठो विश्वे देवा-स्त्रिष्टुप् ।

अहिर्बुध्नः ॥ ३६ ॥ ५ ॥ ५ ॥ वसिष्ठः सविता त्रिष्टुप् ।

इमारुद्राय ॥ ३६ ॥ १३ ॥ १ ॥ कुत्सोरुद्रोजगती ।

समुद्रज्येष्ठा ॥ ३६ ॥ १६ ॥ १ ॥ वसिष्ठ आपस्त्रिष्टुप् ।

वास्तोष्पते ॥ ३६ ॥ २१ ॥ १ ॥ वसिष्ठवास्तोष्पति स्त्रिष्टुप ।

त्र्यम्बकम् ॥ ३६ ॥ ३० ॥ ६ ॥ वसिष्ठोरुद्रोऽनुष्टुप् ।

तच्चक्षुः ॥ ३७ ॥ ११ ॥ १ ॥ वसिष्ठः सूर्यउपर उष्णिक् ।

कुविदङ्ग ॥ ३८ ॥ १३ ॥ १ ॥ वशिष्ठो वायुस्त्रिष्टुप्।
आवायो ॥ ३८ ॥ १४ ॥ १ ॥ तद्वत्।
नतेविष्णो ॥ ३८ ॥ २४ ॥ २ ॥ वशिष्ठो विष्णुस्त्रिष्टुप्।
इरावती ॥ ३८ ॥ २४ ॥ ३ ॥ तद्वत्।
आदित्प्रत्नस्य ॥ ४० ॥ १४ ॥ ५ ॥ वत्स इन्द्रो गायत्री।
उशना ॥ ४० ॥ २३ ॥ ५ ॥ वत्सोमवद्गायत्री।
शमग्निः ॥ ४१ ॥ २६ ॥ ४ ॥ इरिम्बिठिरग्निरुष्णिक्।
मित्रावरुणवन्ता ॥ ४२ ॥ १६ ॥ १ ॥ तद्वत्।
समिधाग्निं ॥ ४३ ॥ ३६ ॥ १ ॥ विरूपोग्नि गायत्री।
अग्निर्मूर्द्धा ॥ ४३ ॥ ३८ ॥ १ ॥ विरूपोग्नि गायत्री।
अग्निः शुचिः ॥ ४३ ॥ ३९ ॥ १ ॥ विरूपोग्नि गायत्री।
तदग्राया ॥ ४४ ॥ १० ॥ ३ ॥ हविर्धानाग्निस्त्रिष्टुप्।
त्वमित्सप्रथ ॥ ४४ ॥ १४ ॥ ५ ॥ भर्गोग्निर्बृहती।
यत इन्द्र भयामहे ॥ ४४ ॥ २० ॥ ३ ॥ भर्ग इन्द्रःप्रगाथम्
अस्मेरुद्रा ॥ ४४ ॥ २५ ॥ ६ ॥ प्रगाथ इन्द्र स्त्रिष्टुप्।
त्वावृधमियाम ॥ ४४ ॥ ३३ ॥ ९ ॥ मत्स्यसांमद आदित्या गायत्री।

सुदेवो असि ॥ ४५ ॥ ७ ॥ २ ॥ पृथुमेधावरुणोनुष्टुप्।
आतून इन्द्रा ॥ ४५ ॥ ३१ ॥ १ ॥ कुसीदीकाण्वः। इन्द्रो गायत्री।

आनोविश्वासुहव्यः ॥४६॥१३॥१॥ सुकक्ष इन्द्रो गायत्री।
त्वन्दाता ॥ ४६ ॥ १३ ॥ २ ॥ सुकक्षं इन्द्रो गायत्री।
योविश्वा ॥ ४७ ॥ १४ ॥ १ ॥ सोभरिरग्निर्बृहती।

योजिनाति ॥ ४८ ॥ १२ ॥ ४ ॥ अवत्सारः सोमः पवमानो गायत्री ।

तरत् समन्दी ॥ ४८ ॥ १४ ॥ १ ॥ अयास्यः सोमो गायत्री ।

यस्मिन् गर्भे ॥ ४८ ॥ १३ ॥ १ ॥ भृगुः सोमस्त्रिष्टुप् ।

उच्चातेजातं ॥ ४८ ॥ १८ ॥ ५ ॥ अमहीयः सोमः पवमानो गायत्री ।

अग्नआयूंषी ॥ ५० ॥ १० ॥ ४ ॥ वैखानसोग्नि र्गायत्री ।

प्रियेजातः ॥५२॥४॥४॥ कण्वः सोमः पवमानस्त्रिष्टुप् ।

इन्द्रायेन्दो ॥५२॥७॥३॥ काश्यपः सोमः पवमानो गायत्री ।

आशाभिश्चः ॥ ५३ ॥ ४ ॥ १ ॥ वसु इन्द्र उष्णिक् ।

पुनानः सोमधारया ॥ ५१ ॥ १२ ॥ ४ ॥ सप्तर्षयः सोमः पवमानो वृहती ।

आपोहिष्ठा ॥ ५४ ॥ ५ ॥ १ ॥ सिन्धुद्वीप आपो गायत्री ।

शन्नोदेवी ॥ ५४ ॥ ५ ॥ ४ ॥ तद्वत् ।

इदमापः ॥ ५४ ॥ ८ ॥ सिन्धुद्वीप आपोनुष्टुप् ।

यमस्यमायम्या ॥ ५४ ॥ ७ ॥ २ ॥ यमोयमः पंक्ती ।

यमायसोमं ॥ ५४ ॥ १६ ॥ ३ ॥ यमोयमोऽनुष्टुप् ।

यमायमधु ॥ ५४ ॥ १६ ॥ ५ । तद्वत् ।

आपो अस्मान् ॥ ५४ ॥ २५ ॥ ५ ॥ देवश्रवा । आपस्त्रिष्टुप् ।

आनिवर्त्तनिवर्त्तय ॥ ५७ ॥ १ ॥ ६ ॥ पवमानो भार्गवः सोम आस्तारः पंक्तिः ।

आम ॥ ५७ ॥ २६ ॥ ५ ॥ गर्ग इन्द्रास्त्रिष्टुप् ।

सर्व्वे नन्दन्ति ॥ ५८ ॥ २४ ॥ ५ ॥ वृहस्पतिर्ज्ञानं त्रिष्टुप् ।

वसूनां ॥ ५८ ॥ ५ ॥ १ ॥ गौरवीतिरिन्द्रस्त्रिष्टुप्।

इमं मे गङ्गे ॥ ५८ ॥ ६ ॥ ५ ॥ पृषमेधानद्यो जगती।

विश्वतश्चक्षुः ॥ ५८ ॥ १६ ॥ ३ ॥ विश्वकर्म्मा त्रिष्टुप्।

नवोनवो ॥ ५८ ॥ २३ ॥ ४ ॥ विप्रचित्ती चन्द्रमा स्त्रिष्टुप्।

पुनःपत्नी ॥ ५८ ॥ २७ ॥ ४ ॥ सूर्य्यात्मा अनुष्टुप्।

इहैवस्तं ॥ ५८ ॥ २८ ॥ २ ॥ सावित्री सूर्य्योनुष्टुप्।

इमान्त्वां ॥ ५८ ॥ ३० ॥ ५ ॥ सावित्री आत्मानुष्टुप्।

रक्षोहणं ॥ ६० ॥ ५ ॥ १ ॥ पायुरग्नि स्त्रिष्टुप्।

चतस्रोऽन्त्य अनुष्टुभः। सम्बाहुभ्यां ॥ ६० ॥ १६ ॥ ३ ॥ विश्वकर्म्मा त्रिष्टुप्।

सहस्रशीर्षा ॥ ६१ ॥ ७ ॥ १ ॥ नारायणः पुरुषोनुष्टुप् अन्त्या त्रिष्टुप्।

या ओषधी ॥ ६१ ॥ ८ ॥ १ ॥ अथर्वणोभिषगोषधयोऽनुष्टुप्।

अश्वत्थे वो ॥ ६१ ॥ ८ ॥ ५ ॥ तद्वत्।

उद्बुध्यध्वं ॥ १६ ॥ १७ ॥ १ ॥ बुधोबुध स्त्रिष्टुप्।

आयुः शिशानो ॥ ६१ ॥ २० ॥ १ ॥ ऐन्द्रो प्रतिरथ इन्द्र स्त्रिष्टुप्।

बृहस्पते गृत्समदो ॥ ६५ ॥ २२ ॥ ४ ॥ बृहस्पतिर्जगती।

इन्द्र आसां ॥ ६१ ॥ २३ ॥ ५ ॥ अप्रतिरथं इन्द्र स्त्रिष्टुप्।

अस्माकं ॥ ६१ ॥ २४ ॥ ५ ॥ तद्वत्।

अद्यादिन्द्रा ॥ ६२ ॥ २१ ॥ ३ ॥ काश्यप इन्द्र स्त्रिष्टुप्।

हिरण्य गर्भे ॥ ६३ ॥ ३ ॥ १ ॥ प्रजापतिरिन्द्रस्त्रिष्टुप्।

नाके सुपर्णं ॥ ६१ ॥ ८ ॥ १ ॥ वेनोवेन स्त्रिष्टुप्।

रात्री व्यख्यदा ॥ ६३ ॥ १४ ॥ १ ॥ कुशिको रात्रीर्गायत्री ।
ममाग्नेवर्चः ॥ ६३ ॥ १५ ॥ १ विहव्यो वैश्वदेवस्त्रिष्टुप् ।
आयन्तां ॥ ६३ ॥ २५ ॥ ५ ॥ वशिष्ठो विश्वेदेवा त्रिष्टुप् ।
सवोरीजानं ॥ ६३ ॥ २९ ॥ ९ ॥ अग्निस्तापसाविश्वेदेवा अनुष्टुप् ।
उत्तानपर्णा ॥ ६४ ॥ ३ ॥ २ ॥ इन्द्राणी उपनिषदनुष्टुप् ।
स्वस्तिदाविशस्पति ॥ ६४ ॥ १८ ॥ २॥ शास इन्द्रोनुष्टुप् ।
सहस्राक्षेण ॥ ६४ ॥१९ ॥ ३ ॥ यक्ष्मनाश इन्द्रस्त्रिष्टुप् ।
शतं जीव ॥ ६४ ॥ १९ ॥ ४ ॥ तद्वत् ।
अक्षिभ्यां ॥ ६४ ॥ २१ ॥ ११ ॥ काश्यपो यक्ष्मानुष्टुप् ।
अङ्गादङ्गात् ॥ ६४ ॥ २१ ॥ ६ ॥ तद्वत् ।
देवाः कपोतः ॥ ६४ ॥ २३ ॥ १ ॥ कपोतइन्द्रस्त्रिष्टुप् ।
विभ्राड् ॥ ६४ ॥ २८ ॥ १ ॥ भार्गवः सूर्यो जगती ।
अन्वाहार्षं ॥ ६४ ॥ ३१ ॥ १ ॥ ध्रुवा राजानुष्टुप् ।
ध्रुवाद्यौः ॥ ६४ ॥ ३१ ॥ ४ ॥ तद्वत् ।
अभावर्त्तेन ॥ ६४ ॥ ३२ ॥ ५ ॥ श्रुतिदत्तं इन्द्रोनुष्टुप् ।
आपघ्नोः ॥ ६४ ॥ ४९ ॥ १ ॥ सार्पिरश्मिः सर्पागायत्री ।
नमो ब्रह्मणे ॥ ६४ ॥ ४९ ॥ ० ॥ वामदेवो लिङ्गोक्तास्त्रिष्टुप् ।

अथ यजुर्व्वेदमन्त्राणाम् ।

इषेत्वा ॥ १ ॥ १ प्रजापतिः शाखानुष्टुप् ।

कुक्कुटोसि प्रजापतिर्व्वाक ।

भूरसि ॥ १ ॥ २ ॥ ४ ॥ प्रजापतिर्व्वाक ।

अत्युष्टं रक्षः ॥ १० ॥ १ ॥ प्रजापती रक्षः।
अतिमितोसि ॥ १ ॥ १० ॥ १० ॥ प्रजापतिः स्रुवः।
सवितुर्वः ॥ १ ॥ २ ॥ ३ ॥ प्रजापति रायः।
कुरुविष्णो ॥ २ ॥ ६ ॥ ८ ॥ बृहती विष्णुः।
चित्रावसोः ॥ ३ ॥ ३ ॥ १० ॥ ऋषयो रात्रिः।
एष ते रुद्रभागः ॥ ३ ॥ ८ ॥ १ ॥ प्रजापतीरुद्रः।
इमामापः ॥ ४ ॥ १ ॥ २ ॥ प्रजापतिरापः।
अभित्यं देवं ॥ ४ ॥ ८ ॥ ३ ॥ प्रजापतिः सविता।
वरुणस्योत्तम्भनमसि ॥ ४ ॥ १० ॥ ९ ॥ प्रजापतिर्वरुणः।
विष्णोरराटं ॥ ५ ॥ ५ ॥ ९ ॥ प्रजापति र्विष्णुः।
उद्दिवंस्तः ॥ ५ ॥ ७ ॥ २ ॥ प्रजापति रौदुम्बरी।
अपश्नो अग्निः ॥ ५ ॥ ९ ॥ ३ ॥ प्रजापतिरग्निस्त्रिष्टुप्।
देवस्यत्वा ॥ ६ ॥ १ ॥ १ प्रजापतिः लिङ्गोक्ता।
सुमित्रान ॥ ३ ॥ ५ ॥ ४ ॥ प्रजापतिरापः।
कार्षिरसि ॥ ६ ॥ ७ ॥ ६ ॥ प्रजापतिरपोऽनुष्टुप्।
नमोस्तुसर्पेभ्यः ॥ १४ ॥ १ ॥ ६ ॥ अग्निनो नरत्याकृतिः।
ब्रह्मयज्ञानं ॥ १४ ॥ १ ॥ २ ॥ अग्निनावादित्य स्त्रिष्टुप्।
शुक्रज्योतिः ॥ १८ ॥ ७ ॥ १ ॥ परमेष्ठी मरुतनुष्णिक्।

सूर्यस्त्वा। परमेष्ठी प्रजापतिः सूर्यः। व्याहृतीनां परमेष्ठी प्रजापतिः। अग्नि वायुः सूर्य प्रजापतयः। उपप्रयन्तो बृहद्देवाग्निर्गायत्री। तनूपा अग्ने बृहद्देवाग्निर्गायत्री। एष ते रुद्रभाग इतिद्वयोर्यजुषोः प्रजापतीरुद्रः प्रथमस्य बृहती साम पंक्तिर्वा। द्वितीयस्य यजुर्बृहती। अदस्तेनत्वा परमेष्ठी प्रजा-

पति राज्यं। भेषजमसि प्रजापती। रुद्रः ककुप्। अम्बकमिति द्वयोः प्रथमायाः वशिष्ठः द्वितीयायाः प्रजापतिरुभयोः रुद्रोऽनुष्टुप्। आकूत्यै, प्रयुजे, मेधायै। दीक्षायै, सरस्वत्यै। इत्येतेषां चतुर्णां मौञ्जभणानां प्रजापतिरग्निरासुरात्रिष्टुप्। यजुः पंक्तिर्वा। चिदसि मनासौस्वप्रजापतिः सोमक्रयणी गौः ब्राह्मी पंक्तिरतिशक्करी वा। अग्नेस्तनुपपरमेष्ठी प्रजापतिर्हविः। देवो वा विष्णुः प्रजापतिर्विष्णुरनुष्टुप्। विष्णोर्नुकं। दिवो वा। प्रतद्विष्णुः। इतितिसृणां प्रजापतिर्विष्णुस्त्रिष्टुप्। आद्ये यजुरन्ते। विष्णोरराटमिति पञ्चयजुषां प्रजापतिर्विष्णुराद्यस्यदैवी जगती। ततश्चतुर्णां दैवी पंक्तिः। अग्नेव्रतपा प्रजापतिरग्निर्ब्रह्मा त्रिष्टुप्। अयन्नःप्रजापतिरग्निर्यजुस्त्रिष्टुप्। इदमापः प्रजापतिरापोमहापंक्तिस्त्रिष्टुबवसाना पावमानशान्त्यः पादः। देवास्त्वशुक्रपा। देवास्त्वा मन्थिपा, इत्यनयोः प्रजापतिः क्रमेण शुक्रमन्थिनौ हविर्धानोऽग्निर्यजुःपंक्ती। आदित्ययाक्रुवतायै। मनुः सतो बृहती। युक्ष्वा हिकेशिनेति मधुच्छन्दा इन्द्रोऽनुष्टुप्। अग्नेपवस्व वैखानसोऽग्निर्गायत्री। उदुत्यञ्जातवेदसमिति देवाः सूर्योगायत्री। उदुत्यमस्कण्वः सूर्योगायत्री। चित्रन्देवानां कुत्स आङ्गिरसः सूर्यस्त्रिष्टुप्। चत्वारि शृङ्गापरमेष्ठी यज्ञपुरुषस्त्रिष्टुप्। देवायज्ञं प्रजापतिः सरस्वत्यः लिङ्गोक्तानुष्टुप्। पितृभ्यःप्रजापत्यः सरस्वत्यः पितरः। वसेन क्रतुना प्रजापतिः सरस्वती लिङ्गोक्तानुष्टुप्। सेना प्रजापतिरनुष्टुप्। अग्नयेग्रेसपतये*

---

* ग्रसपतये इति पुस्तकान्तरे पाठः।

दक्षिणाग्निरासुरीपंक्तिः अग्नेयत्तेशुक्रमित्यस्य प्रजापतिर-ग्निर्गायत्री। सुपर्णोसि गरुत्मानित्यस्य प्रजापतिर्गरुत्मान् जगतिः। द्रुपदादिवेति*। कोकिलोराजपुत्रोवा द्रुपदो वा आपो अनुष्टुप्। शतवन्तः आथर्वणओषधीरनुष्टुप्। याओषधीरित्या-द्यानां योअस्मैभिद्रासतीत्यन्तानां सप्तविंशतीनां आथर्वणपुत्रोभि-षगोषधीरापोऽनुष्टुप्। अश्वावतीर्गोमती: वशिष्ठउषास्त्रिष्टुप्। सीरा युञ्जन्तिभ्यः प्रजापतिः सार्पिरग्निः प्रजापतिरनुष्टुप्। कण्ड-अपाजइतिपञ्चानां देवा वामदेवोऽग्निस्त्रिष्टुप्। काण्डात् काण्डादिति द्वयोरग्निरिष्टिका अनुष्टुप्। अपाङ्गश्च प्रजापति-र्वरुणः पंक्तिः। इमं माहिंग्सं सीरितिपञ्चर्चां†प्रजापतिरग्निस्त्रि-ष्टुप्। अपाल्वा ओषधीरापोग्निरनुष्टुप्। नमस्तेरुद्रमन्यवइति रुद्राध्यायस्य प्रजापतिर्व्वामदेवा वा ऋषयः॥ आद्योऽनुवाकः षोडशर्चोरुद्रदैवतः। प्रथमा गायत्री। ततोयातेरुद्र इत्याद्यास्तिस्त्रोऽनुष्टुभः। असौयस्ताम्रइत्याद्यास्तिस्रः पंक्तयः। नमोस्तु-नीलग्रीवायेत्याद्याः सप्तानुष्टुभः। तत इति द्वे जगती। मनोमहान्तं मानस्तोके इतिद्वयोः कुत्सोऽन्यत्पूर्व्ववत्। द्रापेअन्धसस्पत इत्यन्तानुवाके सप्तऋचः। तत्राद्या उपरिष्टाद्बृहती द्वितीयाया कुत्सर्षि दृष्टा जगती। तृतीयाऽनुष्टुप्। परितोरुद्रस्य। मीढुष्ट मेति द्वे त्रिष्टुभौ। ततोद्वे अनुष्टुभौ असङ्ख्याताः सहस्राणे-त्याद्याः य एतावन्तइत्यन्ताः दशावतानसंज्ञका मन्त्राः बहुरुद्र दैवत्याः अनुष्टुप्छन्दस्काः। ततोभ्याभिनमोस्तुरुद्रेभ्योयेदिवी-

---

* इमं मार्हिंसीरिति पुस्तकान्तरे पाठः।

† द्रुपदादिविः पुस्तकान्तरे पाठः।

ति त्रीणियजूंषि प्रत्यवरोहसंज्ञकानि बहुरुद्रदैवतानि धृति छन्दस्कानि। आद्यान्त्यानुवाकयोर्मध्ये। नमोहिरण्यबाहव इत्यादीनि नमआनिर्हतेभ्य इत्यन्तानि सर्व्वाणि यजूंषि। तेषां सर्व्वेषाम्त्रिस्त्रोऽशीतयो देवताः। तेषां मध्ये। नमो हिरण्यबाहवेसेनान्ये दिशाञ्च पतये नम इत्यादि। नमः एभ्यः स्व पतिभ्यश्च वो नम इत्यन्ता मन्त्राः उभयतो नमस्काराः। नमो भवायेत्यादयो नम आक्खिदते च प्रक्खिदतेचेत्यन्ताः अन्यतरतो नमस्काराः। नमः सभाभ्य इत्यादयो जातसंज्ञकाः रुद्राः। नमो वः किरिकेभ्य इत्याद्याश्चतस्रोव्याहृतिसंज्ञकाः बहुरुद्रदैवता अग्नि, वायु सूर्य्य, हृदयभूताः। आशुःशिशान इति पञ्चानां देवा वैश्वानरोऽग्निर्जगती। अपांफेन। प्रजापतिः सरस्वत्योऽग्निर्गायत्री अग्निश्च पृथिवी च आदित्योग्निः। ब्रह्मजज्ञानं प्रजापतिरादित्य स्त्रिष्टुप् कयानश्चित्रावामदेव इन्द्रोजगती। संवत्सरोसि प्रजा पतिः प्रजापतिर्गायत्री। अहिरिवभोगैः प्रजापतिर्हविस्त्रि-ष्टुप्। बह्वीनां प्रजापतिर्लिङ्गोक्ता त्रिष्टुप्। युञ्जन्तिब्रध्नं मधुछन्दा आदित्यो गायत्री। यमेन दत्तं भार्गवो जमदग्नि-र्दीर्घतमाश्चस्त्रिष्टुप्। आकृष्णेन हिरण्यस्तूपः। सविता त्रिष्टुप्। आनोमित्रावरुणा गृत्समदो मित्रावरुणौ गायत्री। यज्जाग्रत इति पञ्चानां षण्णां। शिवसङ्कल्पमनस्त्रिष्टुप्। पञ्चनद्यः गृत्समदो मित्रावरुणौ गायत्री। उभापिबन्तः प्रस्कण्वाश्विनो गायत्री। यदाबध्नन्दाक्षायणा हिरण्यं त्रिष्टुप्। इमं देवेस्यः सङ्कुशिको मृत्युस्त्रिष्टुप्। पनीमो भरद्वाजः विरि-श्चिरिन्द्रस्त्रिष्टुप्। अग्नेमित्रः दध्यङ्ङाथर्वणो लिङ्गोक्ताऽनु-

ष्टुप्। मनसः कामं दध्यङ्ङाथर्वणः श्रीरनुष्टुप्। गणानां त्वेति चतुर्णां यजुषां प्रजापतिर्लिङ्गोक्ताऽनुष्टुप्। समास्त्वा अग्निरग्निरनुष्टुप्। शन्नोदेवी दध्यङ्ङाथर्वण आपो गायत्री। एकाचमे। देवाअग्निर्जगती। उदुत्तमं शुनःशेफो वरुण स्त्रिष्टुप्। वनस्पते वीडुङ्गोप्रजापतिर्वनस्पतिस्त्रिष्टुप्। भद्रंकर्णेभिस्तिसृणां गौतमोविश्वेदेवास्त्रिष्टुप्। शन्नो शन्नोमित्रः दीर्घतमा इन्द्राग्निस्त्रिष्टुप्। देवकृतस्येति षण्णां प्रजापतिरग्निस्त्रिष्टुप्। मानस्तोकेसङ्कुत्सिको रुद्रोजगती। तद्विष्णोः मेधातिथिर्विष्णुर्गायत्री। कात्ते। प्रजापतिः काम स्त्रिष्टुप्। नमः सम्भवायेत्यादीनां नमो वाकिरेभ्य इत्यन्तानां ऋचां* परमेष्ठी रुद्रस्त्रिष्टुप्। मानो नियुङ्क्ति त्र्यृचां† रुद्र स्त्रिष्टुप्। त्रातारमिन्द्रं प्रजापतिरिन्द्रस्त्रिष्टुप्। बृहस्पते अप्रतिरथइन्द्रस्त्रिष्टुप्। वय्यंसोमबन्धुः सोमोगायत्री। तमीशानं गौतमो विश्वे देवा गायत्री। स्योनापृथिवी मेधा तिथिः पृथिवी गायत्री। वरुणस्योत्तम्भनमसि प्रजापतिर्वरुणः। समुद्रायत्वा। दध्यङ्ङाथर्वणोवाताः। पुनन्तुमा-न्देवाः प्रजापतिः। अदितिर्द्यौः गौतमो विश्वेदेवा स्त्रिष्टुप्। पितुन्नुस्तोषं। अगस्त्योमउष्णिक्। स नःपितेव। विश्वामित्रो मधुच्छन्दोग्निर्गायत्री। विश्वे देवा स आगतः। गृत्समदो विश्वे देवा गायत्री। विश्वतश्चक्षुर्विश्वकर्मा भौवनो विश्वकर्मा त्रिष्टुप्। यवोऽसि। प्रजापतिर्यवः। सोमउष्णिक्। तेजोसि पर-

* प्राणामिति पुस्तकान्तरे पाठः।

† त्रिशर्या इति क्वचित् पाठः।

मेष्ठी प्रजापतिः। देवा वा। प्रजापतिर्व्वा आज्यं वापि देवा सोममोव्राताः वाक्यानां पानो आयुष्यं वर्चस्यमिति तिसृणां दक्षो हिरण्यं क्रमेणोष्णिक् शक्करस्त्रिष्टुप्। तं यज्ञं नारायणः पुरुषः पुरुषोऽनुष्टुप्। सप्तऋषय इत्यध्यात्मवादिनी जगती। उपवहरेगिरीणां* वत्सोऽग्निर्गायत्री। शन्नइन्द्राग्नी दध्यङ्ङाथर्वणलिङ्गोक्ता त्रिष्टुप्। इन्द्रोविश्वामधुच्छन्दा इन्द्रोऽनुष्टुप्। अभित्यन्देवं प्रजापतिः सविता अष्टिरग्निर्गायत्री। ध्रुवास्ति प्रजापतिरौदुम्बरी। अग्निस्तं विरूपोऽग्निर्गायत्री। ऋचं वाचं दध्यङ्ङाथर्वणः लिङ्गोक्ता। इमावासन्दध्यङ्ङाथर्वणः आत्मा अनुष्टुप्। सप्तते अग्ने सप्तर्षिऽग्निस्त्रिष्टुप्। यदक्रन्द इति त्रयोदशानां भार्गवोजमदग्निरश्वस्त्रिष्टुप्। आब्रह्मन् प्रजापतिर्ब्रह्मा यजुः। सजोषसा इन्द्र विश्वामित्र इन्द्रस्त्रिष्टुप्। कार्षिरसि अथर्वा ज्योतिरनुष्टुप्। चित्रावसोः स्वस्तितेति ऋषयो रात्रिः। उद्दिवं प्रजापतिरौदुम्बरी। शंयुर्वार्हत इन्द्रोनुष्टुप्। आयङ्गौः सर्पिरपिः परापररूपेण सर्पा गायत्री। सुमित्रियानः प्रजापतिरापः। उर्मिभियानस्तथा। पृथिवी देव यजनं परमेष्ठी प्रजापतिः देवा वा प्रजापतिर्व्वा। वेदिर्विश्वकर्म्मा विमनाविश्वकर्म्मा त्रिष्टुप्। सुत्रामाणङ्गयस्तात अदितिः त्रिष्टुप्। अहं पितॄन् शङ्खः पितरस्त्रिष्टुप्। नमोस्तु नीलग्रीवाय परमेष्ठी रुद्रोऽनुष्टुप्। परितो† रुद्रस्य परमेष्ठी रुद्रस्त्रिष्टुप्। विकिरिदविलोहितः परमेष्ठी रुद्रो-

* उपवहरे गीणामिति क्वचित् पाठः।

† परिणो रुद्रस्येति क्वचित् पाठः।

ऽनुष्टुप्। उपप्रागादीर्घतमाअस्त्रिष्टुप्। इन्द्रः सुत्रामाः प्राजापत्याग्निसरस्वतीन्द्रोजगती युञ्जतइत्यनुवाकस्य। श्यावाश्वः सावित्री वायुर्जगती। इदं विष्णुर्मेधातिथिर्वैष्णवी। गायत्री। इरावती वाग्निष्ठो विष्णुस्त्रिष्टुप्। देव सुतावग्न धरौ प्राचीस्यन्नेष्टमत्र हविःस्थाने। विष्णोर्नुकमिति तिस्रो वैष्णव्यस्त्रिष्टुभः।

### अथ कुष्माण्डमन्त्राः।

यद्देवास्ति,यदि दिवा। यदिजाग्रदिति तिसृणां प्रजापतिर्ऋषिः क्रमेणाग्निर्वायु सूर्य्यादेवताः सर्व्वासामनुष्टुप्। यद्ग्रामे इत्येतद्यजुर्लिङ्गोक्तदैवतं समुद्रेते द्विपदा विराड्देवी। द्रुपदादिव। प्रजापतिरापोनुष्टुप्। उदयन्तमिति प्रस्कण्वः सूर्य्योऽनुष्टुप्। आपो अद्यब्रह्मचारिषमिति प्रजापतिरग्निः पंक्तिः। एधोसि। समिदसीत्येते। अग्निदैवते यजुषी। समावर्त्तीत्यस्याः अग्निरभिव्यक्ता गायत्री। वैश्वानर ज्योतिरिति वैश्वानरं यजुः। अभ्यादधामीतितृचस्य। आश्वतराश्विरग्निरनुष्टुप्। अंशुना। इत्यस्याः सूर्य्योऽनुष्टुप। सिञ्चति परिषिञ्चतीत्यस्याः सूर्य्य इन्द्रोवा अनुष्टुप्। धानावन्तमित्यस्या विश्वामित्र इन्द्रो गायत्री। बृहदिन्द्राय नृमेध पुरुमेधसाविन्द्रो बृहती। नये मायावकानः सरस्वतीत्यस्य तृचस्य मधुच्छन्दाः सरस्वतीर्गायत्री। आमन्द्रैर्विश्वामित्र इन्द्रो बृहती। आनो विश्वासुहव्यं श्यावाश्व इन्द्रो बृहती। प्रसेनानीः सकुप्तस्कन्धः स्कन्दस्त्रिष्टुप्। पवित्रन्तइति द्वयोरकं पृष्ठस्कन्धो जगती। एषा स्कन्धसंहिता नाम। यद्वा

उपविशति अगस्त्योग्निर्गायत्री । सनादग्ने शुतिर्यातुधानो गायत्री अद्यममीमदन्तः यम इन्द्रः पञ्चपदा पंक्तिः । अविघृष्ठःशंयु र्वरुण स्त्रिष्टुप् अक्रात् समुद्रः वैखानसः सोमस्त्रिष्टुप् । कनिक्रन्त इति द्वयोः सोमः स्वधा त्रिष्टुप् । एषामितरा नाम संहिता । ये ते पन्था अजितस्य जित्यन्ता गायत्री । एतोन्विन्द्रस्तविय इन्द्रो विराट् । शुक्रन्ते अन्यत् । पूषाग्निस्त्रिष्टुप् मह्यतन्सोमा वशिष्ठः पवमानस्त्रिष्टुप । अग्निस्तिग्मेनेति वामदेवाग्निर्गायत्री । परितोषिञ्चता सुतमच्छिद्रः सोमो बृहती पवस्वसोमेति धर्म इन्द्रोत्तरपंक्तिः । चक्रं यद्स्य भारद्वाज इन्द्रो बृहती । घृतवतीति वरुणो द्यावा पृथिव्याववर्जगती । अद्यानो देवसवितः सउच्च सविता गायत्री । त्रातारमिन्द्रं मैत्रइन्द्रो बृहती । महित्रीणां पश्चोह इन्द्रो गायत्री । विश्वामित्रस्य बृहदिन्द्राय बृहती । यो भूतानामित्यस्याः नारायणीयकौत्सस्य ऋषिः ग्रतद्यमाण यंत्री देवता पंक्तिः छन्द आत्माप्रवादरूपेयं प्राणायामे । अग्निन क्षतस्येति द्वे अनुष्टुप् परास्ताद्बृहत्यौ लिङ्गोक्तदैवत्ये । समिद्ध इन्द्र इत्येकादशानामाप्री संज्ञकानामाङ्गिरसऋषिः क्रमेण । इन्धास्तनूपात् । नाराशंसोईडो बर्हिर्द्वारउषसानक्ता दैव्या होतिस्रो देवीस्त्वष्टा वनस्पतिः स्वाहा क्षतय इत्येता देवताः अत उरुप्रथाः प्रथमानं व्यूहः । सुवीरावीरं द्वादशकः । अच्छिन्नं द्वादशकः ।

इति यजुर्विधानं ।

अथ साम्नां ऋषि देवत छन्दांसि ।

इदं विष्णुः पृच्छकस्य विष्णोः प्रकाव्य मुशनेव भुवाणा इति वागहभं पुरुष व्रतेचैषा वैष्णवी नाम। तत्र इदं विष्णुः प्रजापतिर्गायत्री। हृत्रस्य विष्णो विष्णुर्विष्णुर्जगती। प्रकाव्यमुशनेव भुवाणः वरोहे विष्णुस्त्रिष्टुप्। पुरुष व्रते पुरुषो नारायणोऽनुष्टुप्। इदं ह्यां ह्योजसेति प्रथमे तेन यो मधुच्छन्दा इन्द्रो गायत्री। समव्योमघोनां मधुच्छन्दाः विमेदेवा अनुष्टुप् पुरासिन्धुर्नुवा कवि दुःमरुत इन्द्रोऽनुष्टुप्। उपघेम मधुमती चिपन्तः मधुच्छन्दा इन्द्रो द्विपदा विराट। तवस्य सोमं। मधुच्छन्दाः पवमानस्त्रिष्टुप्। सुरूपकृत्नु मधुच्छन्दा गायत्री। उदुत्तमं वरुणपाशमिति गोतमो वरुणोऽनुष्टुप्। शुक्रं चन्द्रो शुक्रश्चन्द्रमाः गायत्री। शुवाशुवा शुद्दोय इन्द्रोऽनुष्टुप्। नृत सूताद्यः अग्निः श्येनस्त्रिष्टुप्। इन्द्रस्त्रिधातु इन्द्रे इन्द्रो बृहती। विश्वा पृतना भिशाक इन्द्रो जगती। सोमं राजानं बृहस्पतिरन्गा, दित्य वरुण विष्णवः। चरुषणी धृतं वार्ह्च्वः सर्पं प्रसर्पं उत्सर्पा जगती। समिन्धार्यन्ति जनिधानं अयां गर्भं आपस्त्रिष्टुप्। इन्द्राहो नृपमग्निर्गायत्री। सन्ते पयांसि सोम व्रते सोमः सोमस्त्रिष्टुप्। सोमव्रतेऽपि देवव्रते ऋषिव्रते रुद्रः। तृतीये विश्वेदेवा। यत्रपदिन्द्रोऽनयदने नेति पूषा पूषा गायत्री। भगो न चित्रेति सान्तनिक अग्निर्विराट। सामद्वयेऽपि। इममिन्द्रेति वर्गद्वयस्य वशिष्ठ इन्द्रोऽनुष्टुप्। परिप्रिया कविरिति। अर्णापवः कवि गायत्री। रथन्तरे वशिष्ठः। ईशान इन्द्रो बृहती। वामदेव्ये वामदेवः सर्व्वदेवा गायत्री। यज्ञः समेति। यशा इन्द्रोबृहती। इन्द्रमिहासिनः कण्वइन्द्रोबृहती।

रथन्तरं पूर्व्ववत् गीर्वाणा पाहि नः सुत मिति । हरिः श्री निधनं इन्द्रो गायत्री । अग्नाविग्निश्चिरवः आग्नित इन्द्रो गायत्री इन्द्रोहिमत् सिन्धवः पूषा इन्द्रो गायत्री । गायन्तीह त्वायन्ति ये इन्द्रोवृहती । गव्येषु गोहये श्यावाश्व इन्द्रो गायत्री । इदं मीधश्चिति मधुच्छन्दा इन्द्रो गायत्री । भद्रानो अग्निराहुत इति । गोतमो भग इन्द्रो गायत्री । वैरूप्याष्टके विरूप इन्द्रोवृहती । अत्राष्टके क्रमादृषयः । आद्ययोः शिखण्डी । तदुत्तरयोरत्रिः । तदुत्तरयोः महास्ववेतसः । तदुत्तरयोः शिरीषः । सर्व्वत्रेन्द्रोदेवता जगतीच्छन्दः । अग्ने विवस्वदुषसः इडिमाच्छव्यो जातवेदाऽनुष्टुप् । एवस्पते सोम इन्द्रस्त्रिष्टुप् । त्रिरश्मैमवतां धन्वश्चेनवो जगतीस्वात्वाहित्वेति ॐसहस्र इति इन्द्रो यजुः । आनावन्तं करयश्विणश्चिति अभिषव इन्द्रो गायत्री वास्तोष्पते इति प्रजापति र्वास्तुयजुः । अभ्रातृव्य इति अभ्रातृव्य इति अभ्रातृव्य इन्द्रः ककुप् । वातआवातुभेषजं काग्निनो वायुर्गायत्री पञ्च निधानं वामदेव्यो वामदेव्यः । राहुर्गायत्री । असिता पूर्व्वपीतय इति । वषट्कारः प्रजापतिरिन्द्रो वृहती । अभि त्वाशूरनोनुमरहस्येन हिरण्व्देन अजिति इन्द्रो वृहती । इन्द्र मिद्देवतातये श्रुव इन्द्रो वृहती । गवात्रते प्रजापतिर्गावस्त्रिष्टुप् । पुरुष व्रते पुरुषोनारायणोऽनुष्टुप् । रात्रि व्रते प्रजापति रात्रिरनुष्टुप् । इन्द्र सामसिंरोहितकुत्साय इन्द्रो गायत्री । भारुण्डसामनि भारुण्डो त्रातवेदाग्निः जगती । गायत्रं साग्नी ब्लक्समाग्नेयगायत्री । रैवत कुत्सरैवत इन्द्रो गायत्री । त्रिसुपर्णौ त्रिसुपर्णः सूर्यो गायत्री । महावैश्वानरव्रते वैश्वानरोऽग्नि

त्रिष्टुप्। पाणिमेति पाणिकः इन्द्रः नानाछन्दांसि। इन्द्र सामनि भारद्वाज इन्द्रो बृहती।

इति सामविधानं।

अथ अथर्व्वमन्त्राणां ऋषि दैवतछन्दांसि॥

शान्तातीयगणस्य शान्तातीयाख्य इन्द्रः सर्व्वाणि छन्दांसि॥

भैषज्यगणस्य भैषज्यं आयुरुष्णिक्।

रौद्रगणस्य, ब्रह्मारौद्रः सर्व्वाणि छन्दांसि।

अथ दशगणः।

शान्तिगणस्य ब्रह्मा सोमोऽनुष्टुप्।

कृत्यादूषणगणस्य।

शुक्रः कृत्यादूषणः सर्व्वाणि छन्दांसि।

चातनगणस्य चातनगणोऽग्निः सर्व्वाणि छन्दांसि।

मातृनामगणस्य मातृनामा ऋषिः मातृनामदेवता उष्णिक्छन्दः।

वास्तोष्पतिगणस्य।

ब्रह्माथर्व्वा वास्तोष्पतिर्देवता सर्व्वाणि छन्दांसि।

पाप्मन गणस्य॥

ब्रह्मा ऋषिः पाप्महा देवता।

गायत्र्युष्णिक्। ककुबनुष्टुप्।

यक्ष्मनाशनगणस्य, मातृनामाऋषिः * यक्ष्मनाशनी देवता सर्व्वाणि छन्दांसि ।

दुःस्वप्ननाशनगणस्य ।

यमऋषिः दुःस्वप्ननाशनी देवता सर्व्वाणि छन्दांसि ।

आयुष्यगणस्य, ब्रह्मा आयुर्गायत्र्यादि सप्तछन्दांसि ।

सर्व्वस्वगणस्य, अथर्वा ऋषिः बृहस्पति र्देवता ।

अनुष्टुप् बृहती पंक्तिरनुष्टुप् ।

अष्टादश गणानां अथर्वाचन्द्रमाः सर्व्वाणि छन्दांसि ।

शन्नो देवीसूक्तस्य सिन्धुद्वीप आपोगायत्री । हिरण्यवर्णाः ऋषयः अथर्वाभ्युक्तस्त्रिष्टुप् ।

अथर्व्वाणानुवाकादीनां अथर्वाचन्द्रः सर्व्वाणि छन्दांसि ।

या ओषधीः, ब्रह्मा बृहस्पतिरनुष्टुप् ।

ममाग्ने वर्च इत्यादीनां चतुर्दशानां कुबेरस्त्रिष्टुप् ।

नदीपं त्वष्टरीवादरायणीरष्टरीजगती ।

सोदक्रामत्सादेवानां अपरिमित इन्द्रोतिच्छन्दाः ॥

सुपर्णोसि सौपर्णोगरुत्मानुष्टुप् ।

इन्द्रजीववेति हृदयसूक्तस्य ब्रह्मा इन्द्रो गायत्री ।

यत्त्वं क्रतुरभवत्त्वं बृहस्पतिः क्रतुरनुष्टुप् ।

मातृनामगणः सुपर्णस्त्वागरुत्मानुष्टुप् ।

यथेदं भूम्यमर्षीतिसूक्तम् ।

अथर्व्वाभूमिः पंक्तिः पृथिव्यामग्ने, अग्निः पृथिव्यन्तरिक्षं

---

* चलिनामेति क्वचित् पाठः ।

द्यौश्चन्द्रमसो देवताः पङ्क्तिजगतीछन्दः। उत्तमोऽसीति मन्त्रस्य प्रतिसर इन्द्रो विष्णुः। सविताश्वद्रौ अग्निः प्रजापति दैवता आद्या पंक्तिः तदुत्तराणां समानामनुष्टुप्।

उदुम्बरेति, मणिनेति, सूक्तम्।

ब्रह्मा कुबेरः पञ्चमादीनां त्रयाणां त्रिष्टुप्।

शेषाणां त्रयोदशानामनुष्टुप्।

योनस्त्वइति ब्रह्मा ईश्वर अनुष्टुप्।

इन्द्रेण दत्तमिति।

वरुण इन्द्रस्त्रिष्टुप्। हिरण्यवर्णाः शुचयः पावकाः ब्रह्मा आपस्त्रिष्टुप्॥

इयं वेदिरिति ब्रह्मा इन्द्रस्त्रिष्टुप्।

अभितव्यमी तातस्य अथर्वा आपः पंक्तिः।

सरस्वतीव्रतेषुते इति सूक्तं।

ब्रह्मासरस्वती अनुष्टुप्।

सौरसामानि विषासहि सहमानमित्यादीनिआथर्व्वण आदित्याजगती।

पिशाचक्षयो गमग्नियातनः पिशाचक्षयो गायत्री।

यमस्य लोकादध्या, ब्रह्मा यमस्त्रिष्टुप्।

अग्निर्वैश्वनायदवाय अग्निरिन्द्रस्त्रिष्टुप्।

ऊर्ध्वो भवेत् अग्नि क्षत्वा प्रतिहरणोऽनुष्टुप्।

इन्द्रं वयं वाणिजं अथर्व्वा ईशानस्त्रिष्टुप्।

कामोमेराजन्निति, ब्रह्मा, कामस्त्रिष्टुप्।
भद्रायकर्णंभद्र्येति कौशिकाश्विनावनुष्टुप्।
तुभ्यमेव जनिमन्निति शंयुर्जरिमा त्रिष्टुप्।
आयातु मित्र इति।

मित्रावरुणावापोऽग्नय त्रिष्टुप्। आशानामाशापालेभ्यः, वाचस्पतिराशापाला अनुष्टुप्। इदन्जनासो विदथ ब्रह्मा द्यावापृथिव्यावनुष्टुप्। अग्नेगोभिरित्येतत् ब्रह्मा अग्नि स्त्रिष्टुप्। शान्ता द्यौरितिसूक्तस्य ब्रह्मा पृथिव्यन्तरिक्षं दिवोऽनुष्टुप्। अयन्तेयोनिर्ऋत्विजः अथर्वाग्निरनुष्टुप्। विविधानवेति अथर्व्वाग्नि स्त्रिष्टुप्। ध्रुवंध्रुवेणेति अथर्व्वा सोमनं अनुष्टुप्। अधुते राजन्निति, चतसृणां अथर्व्वं एक स्त्रिष्टुप्। ययो देवीष्विति ब्रह्मा शास्त्रानुष्टुप् युनक्तिसीरा वियुगा। अथर्व्वा सीता त्रिष्टुप्। सुयवसादिति अथर्व्वा ब्रह्मा त्रिष्टुप्। यदाशइति वाक्देवता एकवर्च अग्निरनुष्टुप्। अर्हंते भग इत्येतत् अथर्व्वा सीता* त्रिष्टुप्। ऐते पन्याः पन्थां पन्था अतिजगती। अवितस्तइति। ब्रह्मा उन्मोचनः पंक्तिः। यो नस्तो अरणो अथर्व्वा ईश्वरस्त्रिष्टुप्। अहवहंमिति मन्त्रं इन्द्र स्त्रिष्टुप्। त्वमुत्तममिति अथर्व्वा सोमोऽनुष्टुप्। यथा यशश्चन्द्रमसि। वरुणश्चन्द्रमा जगती। आनोअग्निइति पतिवेदनः सोमस्त्रिष्टुप्। येन देहीति अयमपामर्य्यमा अथर्व्वा अर्य्यमानुष्टुप्। यत्पृथिव्यामनाहृतं। कल्पमन्त्र। छन्दर्षि देवता नास्ति। शिवःशिवेभिरित्येत् ब्रह्मा शिवस्त्रिष्टुप्। ज्ञात्वा

---

* सूर्य्यं इति पुस्तकान्तरे पाठः।

दूषणे। ब्रह्मा लत्वादूषणेोऽनुष्टुप्। बृहस्पते नः परिपातु-मिद्देति बृहस्पति स्त्रिष्टुप्। मामागो मिन्द्र्मीति सूक्तं, ब्रह्मा ईश्वरोऽनुष्टुप्। अथवोपमग्निरथर्वा: कौशिकीऽग्निरनुष्टुप्। पूषामितसीति तिसृणां यज्ञो देवता। प्रथमायाः पंक्तिः तदु-त्तरयोरनुष्टुप्। अन्त्या गायत्री। प्रगोनवइति सूक्तानि त्रीणि प्राणैः सर्व्वेरनुष्टुप्। देवा मारुतइति, ब्रह्मा। मरुत स्त्रिष्टुप्। मुञ्चामि त्वाइति सूक्तस्य, यक्ष्मनाशन इन्द्राग्नि-स्त्रिष्टुप्। अथर्व्वशिरांसि। अग्निरिति भस्मवायुरिति भस्म जलमिति भस्मस्थलमिति भस्म सर्व्वं हवा भस्मेति।

इत्यथर्व्वणो विधानम्।

अथोङ्कारस्य छन्दर्षिदेवतानि। याज्ञवल्क्यानुक्रमे। ॐमिति परमाक्षरस्य योगिनामालम्बभूतस्य परस्य ब्रह्मणः प्रणवा-ख्यस्य स्थूलादिगुणयुक्तस्य ब्रह्मा ऋषिश्छन्दो गायत्रं परमात्मा देवता ब्रह्मारम्भे विरामे च यागहोमादिषु शान्तिषु कर्मसु चान्येष्वपि कर्म्मसु नित्यनैमित्तिकादिषु सर्व्वेषु विनियोगश्चेति। तथा च शाट्यायनः। दान यज्ञ तपः स्वाध्याय जपाध्यानसन्ध्यो-पासन प्राणायाम होम दैव, पितृमन्त्रोच्चारणब्रह्मारम्भादिति प्रणवेषु धार्य्यं। प्रवर्त्तयेदिति मन्त्राणां छन्दर्षिदेवता ज्ञाना-वश्यकत्वमुक्तं। याज्ञवल्क्यानुक्रमे ऋषिदैवतछन्दसां स्वरूप मुक्त्वा एतान्यविदित्वा योऽधीतेऽनुब्रूते जपते जुहोति यजते याजयते तस्य ब्रह्म न चिरं यातयामं भवति स्थाणुं वर्च्छति प्रदूयते वा पापीयान् भवतीति छन्दोगब्राह्मणे योह

